लद्धूणवि देवत्तं, उववन्नो देवकिव्विसे। तत्थावि से न याणाइ, किं मे किच्चा इमं फलं? ॥ २०६ ॥
तत्तोवि से चइत्ताणं, लब्भिही एलमूअगं। नरयं तिरिक्खजोणिं वा, बोही जत्थ सुदुल्लहा ॥ २०७ ॥
एअं च दोसं दट्ठूणं, नायपुत्तेण भासिअं। अणुमायंपि मेहावी, मायामोसं विवज्जए ॥ २०८ ॥

स्तेनाधिकार एवेदमाह–तवत्ति, तपस्तेनो वाक्स्तेनो रूपस्तेनश्च यो नरः कश्चिद् आचारभावस्तेनश्च [नामक्षपकरूपश्च] पालयन्नपि क्रियां तथाभावदोषात् करोति देवकिल्बिषं कर्म्म निर्वर्त्तयतीत्यर्थः, तत्र तपस्तेनो नाम क्षपकरूपकल्पः कश्चित् केनचित् पृष्टः, त्वमसौ क्षपक इति ?, पूजाद्यर्थमाह–अहं, अथवा वक्ति–साधव एव क्षपकास्तूष्णीं वाऽऽस्ते, एवं वाक्स्तेनो धर्मकथकादितुल्यरूपः कश्चित्केनचित्पृष्ट इति। एवं रूपस्तेनो राजपुत्रादेस्तुल्यरूपः। एवमाचारस्तेनो विशिष्टाचारवर्त्ति-तुल्यरूप इति। भावस्तेनस्तु परोत्प्रेक्षितं कथञ्चित्केनचित् श्रुत्वा स्वयमनुत्प्रेक्षितमपि मयैतत्प्रपञ्चेन चर्चितमित्याहेति ॥ २०५ ॥ अयं चेत्थंभूतः, लद्धूणवित्ति, लब्ध्वापि देवत्वं तथाविधक्रियापालनवशेनोपपन्नो देवकिल्बिषे–देवकिल्बिषिका ये, तत्राप्यसौ न जानाति विशुद्धावध्यभावात्, किं मम कृत्वेदं फलं–किल्बिषिकदेवत्वमिति ॥ २०६ ॥ अस्यैव दोषान्तर-माह–तत्तोत्ति, ततोऽपि देवलोकादसौ च्युत्वा लप्स्यते एलमूकताम्–अजभाषानुकारित्वं मानुषत्वे, तथा नरकं तिर्य-ग्योनिं वा पारम्पर्येण लप्स्यते, बोधिर्यत्र सुदुर्लभः–सकलसम्पन्निबन्धना यत्र जिनधर्मप्राप्तिर्दुरापा। इह च प्राप्नोत्येलमूकतामिति वाच्ये असकृद्भावप्राप्तिख्यापनाय लप्स्यत इति भविष्यत्कालनिर्देश इति ॥ २०७ ॥ प्रकृतमुपसंहरति–

एयं चेति, एनं दोषं-अनन्तरोदितं सत्यपि श्रामण्ये किल्बिषिकत्वादिप्राप्तिरूपं दृष्ट्वा आगमतो ज्ञातपुत्रेण-भगवता वर्द्धमानेन भाषितं-उक्तं अणुमात्रमपि-स्तोकमात्रमपि, किमुत प्रभूतं ? मेधावी-मर्यादावर्ती, मायामृषावादं-अनन्तरोदितं विवर्जयेत्परित्यजेदिति ॥ २०८ ॥

सिक्खिऊण भिक्खेसणसोहिं, संजयाण बुद्धाण सगासे ।
तत्थ भिक्खु सुप्पणिहिइंदिए, तिव्वलज्जगुणवं विहरिज्जासि ॥ २०९ ॥ त्तिबेमि ।

॥ पंचमं पिंडेसणानामज्झयणं समत्तं ॥

अध्ययनार्थमुपसंहरन्नाह-सिक्खिऊणत्ति, शिक्षयित्वाऽधीत्य भिक्षैषणाशुद्धिं-पिण्डमार्गणाशुद्धिमुद्गमादिरूपां, केभ्यः सकाशादित्याह-संयतेभ्यः-साधुभ्यः, बुद्धेभ्योऽवगततत्त्वेभ्यो गीतार्थेभ्यो न द्रव्यसाधुभ्यः सकाशात् । ततः किमित्याह-तत्र भिक्षैषणायां भिक्षुः-साधुः सुप्रणिहितेन्द्रियः-श्रोत्रादिभिर्गाढं तदुपयुक्तस्तीव्रलज्जः-उत्कृष्टसंयमः सन्, अनेन प्रकारेण गुणवान् विहरेत्-सामाचारीपालनं कुर्यात्, ब्रवीमीति पूर्ववदिति ॥ २०९ ॥

॥ इति पिण्डैषणाध्ययने द्वितीय उद्देशकः समाप्तः, समाप्तं च पिण्डैषणाध्ययनम् ५ ॥



व्याख्यातं पिण्डैषणाध्ययनं, अधुना महाचारकथाख्यमारभ्यते, अस्य चायमभिसम्बन्धः-इहानन्तराध्ययने साधोर्भिक्षाविशोधिरुक्ता, इह तु गोचरप्रविष्टेन सता स्वाचारं पृष्टेन तद्विदाऽपि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्य इति, अपि त्वालये गुरवो वा कथयन्तीति वक्तव्यमित्येतदुच्यते, उक्तं च—" गोयरग्गपविट्ठो उ, न निसीएज्ज कत्थइ। कहं च न पबंधेज्जा चिट्ठित्ता ण व संजए ॥ १ ॥ " इत्यनेनाभिसम्बन्धेनायातमिदमध्ययनमिति, तच्चेदं—

नाणदंसणसंपन्नं, संजमे अ तवे रयं । गणिमागमसंपन्नं, उज्जाणम्मि समोसढं ॥ २१० ॥
रायाणो रायमच्चा य, माहणा अदुव खत्तिआ। पुच्छंति निहुअप्पाणो, कहं भे आयारगोयरो ? ॥२११॥
तेसिं सो निहुओ दंतो, सव्वभूअसुहावहो । सिक्खाए सुसमाउत्तो, आयक्खइ विअक्खणो ॥२१२॥
हंदि धम्मत्थकामाणं, निग्गंथाणं सुणेह मे । आयारगोअरं भीमं, सयलं दुरहिट्ठिअं ॥ २१३ ॥
नन्नत्थ एरिसं वुत्तं, जं लोए परमदुच्चरं । विउलट्ठाणभाइस्स, न भूअं न भविस्सइ ॥ २१४ ॥

नाणदंसणसंपन्नमित्यादि, ज्ञानदर्शनसंपन्नं ज्ञानं-श्रुतज्ञानादि दर्शनं-क्षायोपशमिकादि ताभ्यां संपन्नं-युक्तं संयमे-पञ्चाश्रवविरमणादौ तपसि च-अनशनादौ रतं-आसक्तं, गणोऽस्यास्तीति गणी तं गणिनं-आचार्य, आगमसंपन्नं-विशिष्टश्रुतधरं, बह्वागमत्वेन प्राधान्यख्यापनार्थमेतत्। उद्याने-क्वचित्साधुप्रायोग्ये समवसृतं-स्थितं धर्मदेशनार्थं वा प्रवृत्तमिति ॥ २१० ॥ तत्किमित्याह-रायाणोत्ति, राजानः-नरपतयः, राजामात्याश्च-मन्त्रिणः, ब्राह्मणाः प्रतीताः,

अनुवर्त्ति तथा क्षत्रियाः श्रेष्ठ्यादयः पृच्छन्ति निभृतात्मानः—असम्भ्रान्ता रचिताञ्जलयः, कथं भे—भवतामाचारगोचरः—क्रियाकलापः स्थित इति ॥ २११ ॥ तेसिंति, तेभ्यो राजादिभ्यः, असौ गणी निभृतोऽसम्भ्रान्तः उचितधर्मकायस्थित्या दान्त इन्द्रियनोइन्द्रियदमाभ्यां सर्वभूतसुखावहः—सर्वप्राणिहित इत्यर्थः। शिक्षया—ग्रहणासेवनारूपया, सुसमायुक्तः—सुष्ठु—एकीभावेन युक्तः, आख्याति—कथयति विचक्षणः—पण्डित इति॥ २१२॥ हंदि धम्मत्थ, इन्दीत्युपप्रदर्शने, तमेनं धम्मार्थकामानामिति, धर्मः—चारित्रधर्मादिस्तस्यार्थः—प्रयोजनं मोक्षस्तं कामयन्ति—इच्छन्तीति विशुद्धविहितानुष्ठानकरणेनेति धर्मार्थकामा—मुमुक्षवस्तेषां निर्ग्रन्थानां—बाह्याभ्यन्तरग्रन्थरहितानां शृणुत मम समीपात्, आचारगोचरं—क्रियाकलापं भीमं—कर्मशत्र्वपेक्षया रौद्रं सकलं—संपूर्णं दुरधिष्ठं(ष्ठितं)—क्षुद्रसत्त्वैर्दुराश्रयमिति॥ २१३ ॥ इहानन्तरसूत्रे निर्ग्रन्थानामाचारगोचरकथनोपन्यासः कृतः, साम्प्रतमस्यैवार्थतो गुरुतामाह—नन्नत्थत्ति, न अन्यत्र—कपिलादिमते ईदृशं उक्तमाचारगोचर वस्तु यल्लोके—प्राणिलोके परमदुश्चरं—अत्यन्तदुष्करमित्यर्थः। ईदृशं च विपुलस्थानभाजिनः—विपुलस्थानं—विपुलमोक्षहेतुत्वात् संयमस्थानं तद्भजते—सेवते तच्छीलश्च यः तस्य, न भूतं न भविष्यतीति अन्यत्र जिनमतादिति ॥ २१४ ॥

सखुड्डगविअत्ताणं, वाहिआणं च जे गुणा। अखंडफुडिआ कायव्वा, तं सुणेह जहा तहा ॥२१५॥

दस अट्ठ य ठाणाइं, जाइं बालोऽवरज्झइ। तत्थ अन्नयरे ठाणे, निग्गंथत्ताउ भस्सइ ॥ २१६ ॥

एतदेव संभावयन्नाह—सखुड्डगत्ति, सह क्षुल्लकैः—द्रव्यभावबालैर्ये वर्त्तन्ते ते व्यक्ता—द्रव्यभाववृद्धास्तेषां सक्षुल्लक-

व्यक्तानां, सबालवृद्धानामित्यर्थः, व्याधिमतां चशब्दादव्याधिमतां च, सरुजानां नीरुजानां चेतिमावः। जे ये गुणा वक्ष्य-
माणलक्षणास्तेऽखण्डास्फुटिताः कर्त्तव्याः, अखण्डा देशविराधनापरित्यागेन अस्फुटिताः सर्वविराधनापरित्यागेन, तत्
श्रृणुत यथा कर्त्तव्यास्तथेति ॥ २१५॥ ते चागुणपरिहारेणाखण्डास्फुटिता भवन्तीत्यगुणास्तावदुच्यन्ते–दसेत्ति–दशाष्टौ च
स्थानानि–असंयमस्थानानि वक्ष्यमाणलक्षणानि यान्याश्रित्य बालः–अज्ञोऽपराध्यति तत्सेवनयाऽपराधमाप्नोति । कथम-
पराध्यतीत्याह–तत्रान्यतरे स्थाने वर्त्तमानः प्रमादेन निर्ग्रंथत्वात्–निर्ग्रन्थभावाद् भ्रश्यति निश्चयनयेनापैति बाल
इति ॥ २१६ ॥

कानि पुनस्तानि स्थानानि ? इत्याह–"वयछक्कं कायछक्कं, अकप्पो गिहिभायणं। पलियंकनिसज्जा य, सिणाणं सोहवज्जणं॥"
(दश० नि० २७० ) ॥ वयछक्कन्ति, व्रतषट्कं–प्राणातिपातनिवृत्त्यादीनि रात्रिभोजनविरतिषष्ठानि षड्व्रतानि, कायषट्कं–
पृथिव्यादयः षड्जीवनिकायाः, अकल्पः–शिक्षकस्थापनाकल्पादिर्वक्ष्यमाणः, गृहिभाजनं–गृहस्थभाजनं गृहस्थसम्बन्धि
कांस्यभाजनादि प्रतीतं, पर्यङ्कः–शयनीयकविशेषः प्रतीतः, निषद्या च–गृहे एकानेकरूपा, स्नानं–देशसर्वभेदभिन्नं,
शोभावर्जनं–विभूषापरित्यागः, वर्जनमिति च प्रत्येकमभिसम्बध्यते शोभावर्जनं स्नानवर्जनमित्यादीति ॥ २७० ॥

तत्थिमं पढमं ठाणं, महावीरेण देसिअं । अहिंसा निउणा दिट्ठा, सव्वभूएसु संजमो ॥ २१७ ॥

जावंति लोए पाणा, तसा अदुव थावरा । ते जाणमजाणं वा, न हणे णोवि घायए ॥ २१८ ॥

सव्वे जीवा वि इच्छंति, जीविउं न मरिज्जिउं । तम्हा पाणवहं घोरं, निग्गंथा वज्जयंति णं ॥ २१९ ॥

गुणा अष्टादशसु स्थानेष्वखण्डास्फुटिताः कर्तव्याः, तत्र विधिमाह–तत्थिमन्ति, तत्राष्टादशविधे स्थानगणे प्रथमं स्थानं वाऽनासेवनाद्वारेणेदं–वक्ष्यमाणलक्षणं प्रथमं स्थानं महावीरेण–भगवता अपश्चिमतीर्थकरेण देशितं–कथितं, यदुताहिंसेति। इयं च सामान्यतः प्रभूतैर्देशितेत्याह–निपुणा–आधाकर्माद्यपरिभोगतः कृतकारितादिपरिहारेण सूक्ष्मा, नागमद्वारेण देशिता अपि तु दृष्टा–साक्षाद्धर्मसाधन(क)त्वेनोपलब्धा, किमितीयमेव निपुणेत्याह–यतोऽस्यामेव महावीरदेशितायां सर्वभूतेषु–सर्वभूतविषयः संयमो, नान्यत्र उद्दिश्यकृतादिभोगविधानादिति ॥ २१७ ॥ एतदेव स्पष्टयन्नाह–जावंतित्ति, यतो हि भागवत्याज्ञा–यावन्तः केचन लोके प्राणिनस्त्रसा–द्वीन्द्रियादयः, अथवा स्थावराः–पृथिव्यादयः, तान् जानन् रागाद्यभिभूतो व्यापादनबुद्ध्याऽजानन्वा प्रमादपारतन्त्र्येण न हन्यात्स्वयं नापि घातयेत् अन्यैः, एकग्रहणे तज्जातीयग्रहणात् घ्नतोऽपि अन्यांश्च समनुजानीयात् अतो निपुणा दृष्टेति ॥ २१८ ॥ अहिंसैव कथं साध्वीत्येतदाह–सव्वेत्ति, सर्वे जीवा अपि दुःखितादिभेदभिन्ना इच्छन्ति जीवितुं, न मर्तुं प्राणवल्लभत्वात्। यस्मादेवं तस्मात्प्राणवधं घोरं–रौद्रं दुःखहेतुत्वात् निर्ग्रन्थाः–साधवो वर्जयन्ति भावतः । णमिति वाक्यालङ्कारे इति ॥ २१९ ॥

अप्पणट्ठा परट्ठा वा, कोहा वा जइ वा भया । हिंसगं न मुसं बूआ, नो वि अन्नं वयावए ॥२२०॥
मुसावाओ उ लोगम्मि, सव्वसाहूहिं गरिहिओ । अविस्सासो अ भूआणं, तम्हा मोसं विवज्जए ॥२२१॥

उक्तः प्रथमस्थानविधिः, अधुना द्वितीयस्थानविधिमाह–अप्पणट्ठत्ति, आत्मार्थं–आत्मनिमित्तं अग्लान एव ग्लानोहं ममानेन कार्यमित्यादि, परार्थं वा–परनिमित्तं वा एवमेव, तथा क्रोधाद्वा त्वं दास इत्यादि, एकग्रहणे तज्जातीयग्रहणमिति मानाद् वा, अबहुश्रुत एवाहं बहुश्रुत एवमादि, मायातो भिक्षाटनपरिजिहीर्षया पादपीडा ममेत्यादि, लोभात् शोभनतरान्नलाभे सति प्रान्तस्यैषणीयत्वेऽपि अनेषणीयमिदमित्यादि, यदिवा भयात्किञ्चिद्वितथं कृत्वा प्रायश्चित्तभयान्न कृतमित्यादि, एवं हासादिष्वपि वाच्यं । अत एवाह–हिंसकं–परपीडाकारि सर्वमेव न मृषा ब्रूयात् स्वयं, नाप्यन्यं वादयेत्, एकग्रहणे तज्जातीयग्रहणात् ब्रुवतोऽप्यन्यान्न समनुजानीयादिति ॥ २२० ॥ किमित्येतदित्याह–मुसावाउत्ति, मृषावादो हि लोके सर्वस्मिन्नेव सर्वसाधुभिर्गर्हितो–निन्दितः, सर्वव्रतापकारित्वात्, प्रतिज्ञातापालनात् अविश्वासश्च–अविश्वसनीयश्च भूतानां मृषावादी भवति, यस्मादेवं तस्मात् मृषावादं वर्जयेदिति ॥ २२१ ॥

**चित्तमंतमचित्तं वा, अप्पं वा जइ वा बहुं । दंतसोहणमित्तंपि, उग्गहंसि अजाइया ॥ २२२ ॥**
**तं अप्पणा न गिण्हंति, नोवि गिण्हावए परं । अन्नं वा गिण्हमाणंपि, नाणुजाणंति संजया ॥२२३॥**

उक्तो द्वितीयस्थानो विधिः । साम्प्रतं तृतीयस्थानविधिमाह–चित्तमंतत्ति, चित्तवत्–द्विपदादि वा अचित्तवद्वा–हिरण्यादि, अल्पं वा–मूल्यतः प्रमाणतश्च, यदि वा बहु–मूल्यप्रमाणाभ्यामेव, किं बहुना ? दन्तशोधनमात्रमपि तथाविधं तृणादि अवग्रहे यस्य तत्तमयाचित्वा न गृह्णन्ति साधवः कदाचनेति ॥ २२२ ॥ एतदेवाह–तमिति, तच्चित्तवदादि आत्मना न गृह्णन्ति विरतत्वान्नापि ग्राहयन्ति परं विरतत्वादेव, तथाऽन्यं वा गृह्णन्तमपि स्वयमेव न अनु-

जानन्ति–नानुमन्यन्त संयता इति ॥ २२३ ॥

अबंभचरिअं घोरं, पमायं दुरहिट्ठिअं । नायरंति मुणी लोए, भेआययणवज्जिणो ॥ २२४ ॥

मूलमेयमहम्मस्स, महादोससमुस्सयं । तम्हा मेहुणसंसग्गं, निग्गंथा वज्जयंति णं ॥ २२५ ॥

उक्तः तृतीयस्थानविधिः, चतुर्थस्थानविधिमाह–अबंभ त्ति, अब्रह्मचर्यं प्रतीतं, घोरं–रौद्रं रौद्रानुष्ठानहेतुत्वात्, प्रमादं–प्रमादवत् सर्वप्रमादमूलत्वात्, दुरधिष्ठितं–दुराश्रयं दुस्सेवं विदितजिनवचनेनानन्तसंसारहेतुत्वात्, यतश्चैवमतो नाचरन्ति–नासेवन्ते मुनयो लोके–मनुष्यलोके किं विशिष्टा? इत्याह–भेदायतनवर्जिनः–भेदः–चारित्रभेदः तदायतनं–तत्स्थानमिदमेवोक्तन्यायात्तद्वर्जिनः चारित्रातिचारभीरव इति ॥ २२४ ॥ एतदेव निगमयति–मूलमेयंति, मूलं–बीजमेतदधर्मस्य पापस्येति पारलौकिकोऽपायः। महादोषसमुच्छ्रयं-महतां दोषाणां चौर्यप्रवृत्त्यादीनां समुच्छ्रयं-सङ्घातवदिति ऐहिकोऽपायः । यस्मादेवं तस्मान्मैथुनसंसर्गं इति प्राकृतत्वात् मैथुनसंसर्गं–मैथुनसम्बन्धं योषिदालापाद्यपि निर्ग्रन्था वर्जयन्ति, णमिति वाक्यालङ्कार इति ॥ २२५ ॥

विडमुब्भेइमं लोणं, तिल्लं सप्पिं च फाणिअं । न ते संनिहिमिच्छंति, नायपुत्तवओरया ॥ २२६ ॥

लोहस्सेस अणुप्फासे, मन्ने अन्नयरामवि । जे सिआ सन्निहिं कामे, गिही पव्वइए न से ॥ २२७ ॥

जंपि वत्थं वा पायं वा, कंबलं पायपुंछणं । तंपि संजमलज्जट्ठा, धारंति परिहरंति अ ॥ २२८ ॥

न सो परिग्गहो वुत्तो, नायपुत्तेण ताइणा। मुच्छा परिग्गहो वुत्तो, इअ वुत्तं महेसिणा ॥ २२९ ॥
सव्वत्थुवाहिणा बुद्धा, संरक्खणपरिग्गहे । अविअप्पणोऽवि देहंमि, नायरंति ममाइयं ॥ २३० ॥

प्रतिपादितश्चतुर्थस्थानविधिः, इदानीं पञ्चमस्थानविधिमाह–बिडमुक्ति, बिडं–गोमूत्रादिपक्वं, उद्भेद्यं–सामुद्रादि यद्वा बिडं–प्रासुकं उद्भेद्यमप्रासुकमपि, एवं द्विप्रकारं लवणं, तथा तैलं सर्पिश्च फाणितं, तत्र तैलं प्रतीतं, सर्पिः–घृतं, फाणितं–द्रवगुडः, एतल्लवणादि एवं प्रकारमन्यच्च न ते साधवः संनिधिमिच्छन्ति–पर्युषितं स्थापयन्ति, ज्ञातपुत्रवचोरताः–भगवद्वर्द्धमानवचसि निस्सङ्गताप्रतिपादनपरे रताः–सक्ता इति ॥ २२६ ॥ संनिधिदोषमाह–लोहस्सेत्ति, लोभस्य–चारित्रविघ्नकारिणश्चतुर्थकषायस्यैषोऽनुस्पर्शः–एषोऽनुभावो यदुत एतत् सन्निधिकरणमिति, यतश्चैवमतो[ऽहं]–मन्ये मन्यन्ते प्राकृतशैल्या एकवचनं, एवमाहुः तीर्थकरगणधराः, अन्यतरामपि–स्तोकामपि यः स्यात्, यः कदाचित्सन्निधिं कामयते–सेवते गृहीति–गृहस्थोऽसौ भावतः प्रव्रजितो नेति, दुर्गतिनिमित्तानुष्ठानप्रवृत्तेः, सन्निधीयते नरकादिष्वात्माऽनयेति, सन्निधिरिति शब्दार्थात् प्रव्रजितस्य च दुर्गतिगमनाभावादिति ॥ २२७ ॥ आह–यद्येवं वस्त्रादि धारयतां कथं साधुनामसन्निधिरित्यत्राह–जंपित्ति, यदप्यागमोक्तं, वस्त्रं वा–चोलपट्टकादि, पात्रं वा–अलाबुकादि, कम्बलं–वर्षाकल्पादि, पादपुञ्छनं–रजोहरणं, तदपि संयमलज्जार्थमिति, संयमार्थं पात्रादि, तद्व्यतिरेकेण पुरुषमात्रेण गृहस्थभाजने सति संयमपालनाभावात्, लज्जार्थं वस्त्रं, तद्व्यतिरेकेणाङ्गनादौ विशिष्टश्रुतपरिणत्यादिरहितस्य निर्लज्जतोपपत्तेः, अथवा संयम एव लज्जा संयमलज्जा तदर्थं सर्वमेतद्वस्त्रादि धारयन्ति, यथालम्भनविधानेन परिहरंति च–परिभुञ्जते च मूर्च्छारहिता इति ॥ २२८ ॥

यतश्चैवमतः-न सोत्ति, नासौ निरभिष्वङ्गस्य वस्त्रधारणादिलक्षणः परिग्रह उक्तो बन्धहेतुत्वाभावात्, केन ?, ज्ञात-पुत्रेण-ज्ञात-उदारक्षत्रियः सिद्धार्थस्तत्पुत्रेण वर्धमानेन, त्रायी-स्वपरपरित्राणसमर्थेन, अपि तु मूर्च्छा-ममत्वमपि वस्त्रादिष्वभिष्वङ्गः परिग्रह उक्तो बन्धहेतुत्वात्, अर्थतस्तीर्थकरेण, ततोऽवधार्य इत्येवमुक्तो महर्षिणा-गणधरेण सूत्रे शय्यंभवेनेति ॥ २२९ ॥ आह-वस्त्राद्यभावभाविन्यपि मूर्च्छा कथं वस्त्रादिमात्रे साधूनां न भविष्यति ?, उच्यते, सम्यग्बोधेन तद्बीजभूताबोधोपघातात्, आह च-सव्वत्थत्ति, सर्वत्र-उचिते क्षेत्रे काले च उपधिनाऽऽगमोक्तेन वस्त्रादिना सहापि बुद्धा-यथावद्विदितवस्तुतत्त्वाः साधवः, संरक्षणपरिग्रह इति-संरक्षणाय षण्णां जीवनिकायानां वस्त्रादिपरिग्रहे सत्यपि नाचरन्ति ममत्वमिति योगः। किंचानेन ?, ते हि भगवन्तः, अप्यात्मनोऽपि देह इति-आत्मनो धर्मकायेऽपि विशिष्टप्रति-बन्धसंगतिं न कुर्वन्ति, ममत्वमात्मीयाभिमानं वस्तुतत्त्वावबोधात्, तिष्ठतु तावदन्यत्, नवम देहवद्वापरिग्रह एवेति ॥२३०॥

अहो निच्चं तवोकम्मं, सव्वबुद्धेहिं वण्णिअं। जाव लज्जासमा वित्ती, एगभत्तं च भोअणं ॥ २३१ ॥

संतिमे सुहुमा पाणा, तसा अदुव थावरा। जाइं राओ अपासंतो, कहमेसणिअं चरे ? ॥ २३२ ॥

उदउल्लं बीअसंसत्तं, पाणा निवडिया महिं। दिआ ताइं विवज्जिज्जा, राओ तत्थ कहं चरे ? ॥ २३३ ॥

एअं च दोसं दट्ठूणं, नायपुत्तेण भासिअं। सव्वाहारं न भुंजंति, निग्गंथा राइभोअणं ॥ २३४ ॥

उक्तः पञ्चमस्थानविधिः, अधुना षष्ठमधिकृत्याह-अहोत्ति, अहो नित्यं तपःकर्मेति, अहो-विस्मये नित्यं नाम-

अपायाभावेन तदन्यगुणवृद्धिसम्भवादप्रतिपात्येव तपःकर्म्म-तपोऽनुष्ठानं, सर्वबुद्धैः-सर्वतीर्थकरैर्वर्णितं-देशितं, किंविशिष्ट-
मित्याह-यावल्लज्जासमा वृत्तिः-लज्जा-संयमः तत्समा-सदृशी तुल्या संयमाविरोधिनीत्यर्थः, वर्त्तनं वृत्तिः-देहपालना,
एकभक्तं च भोजनं-एकं भक्तं द्रव्यतो भावतश्च यस्मिन् भोजने तत्तथा, द्रव्यत एकं-एकसंख्यानुगं, भावत एकं-
कर्मबन्धाभावादद्वितीयं, तद्दिवस एव रागादिरहितस्यान्यथा भावतः एकत्वाभावादिति ॥ २३१ ॥ रात्रिभोजने प्राणाति-
पातसम्भवेन कर्मबन्धसद्वितीयतां दर्शयति-संति मेत्ति, सन्त्येते-प्रत्यक्षोपलभ्यमानस्वरूपाः सूक्ष्माः-श्लक्ष्णाः, प्राणिनो-
जीवास्त्रसा-द्वीन्द्रियादयः, अथवा स्थावराः-पृथिव्यादयो यान् प्राणिनो रात्रावपश्यन् चक्षुषा कथमेषणीयं-सत्त्वानु-
परोधेन चरिष्यति-भोक्ष्यते च, असम्भव एव रात्रावेषणीयचरणस्येति ॥ २३२ ॥ एवं रात्रिभोजने दोषमभिधायाधुना ग्रहण-
गतमाह-उदउल्लंति, उदकार्द्रं-पूर्ववदेकग्रहणे तज्जातीयग्रहणात् सस्निग्धादिपरिग्रहः । तथा बीजसंसक्तं-बीजैः संसक्तं-
मिश्रमोदनादीति गम्यते । अथवा बीजानि पृथग्भूतान्येव संसक्तं चारनालाद्यपरेणेति । तथा प्राणिनः संपातिमप्रभृतयो
निपतिता मह्यां-पृथिव्यां सम्भवन्ति । ननु दिवाप्येतत्सम्भवत्येव ?, सत्यं, किंतु परलोकभीरुश्चक्षुषा पश्यन् दिवा तान्युद-
कार्द्रादीनि विवर्जयेत्, रात्रौ तु तत्र कथं चरेत् संयमानुपरोधेन ? असम्भव एव शुद्धचरणस्येति ॥२३३॥ उपसंहरन्नाह-एयं
चत्ति, एतदनन्तरोदितं प्राणिहिंसारूपं चशब्दादन्यं चात्मविराधनादिलक्षणं च दोषं दृष्ट्वा मतिचक्षुषा ज्ञातपुत्रेण भगवता
भाषितं-उक्तं, सर्वाहारं-चतुर्विधमप्यशनादिलक्षणमाश्रित्य न भुञ्जन्ते निर्ग्रन्थाः-साधवो रात्रिभोजनमिति ॥२३४॥

**पुढविकायं न हिंसंति, मणसा वयसा कायसा । तिविहेणं करणजोएणं, संजया सुसमाहिआ ॥२३५॥**

पुढविकायं विहिंसंतो, हिंसई उ तयस्सिए। तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥२३६॥
तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं। पुढविकायसमारंभं, जावजीवाइ वज्जए ॥ २३७ ॥
आउकायं न हिंसंति, मणसा वयसा कायसा। तिविहेण करणजोएण, संजया सुसमाहिआ ॥२३८॥
आउकायं विहिंसंतो, हिंसई उ तयस्सिए। तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥२३९॥
तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं। आउकायसमारंभं, जावजीवाइ वज्जए ॥ २४० ॥

उक्तं व्रतषट्कं, अधुना कायषट्कमुच्यते, तत्र पृथिवीकायमधिकृत्याह-पुढवित्ति, पृथिवीकायं न हिंसन्त्यालेखनादिना प्रकारेण मनसा वाचा कायेन, उपलक्षणमेतदत एवाह-त्रिविधेन करणयोगेन-मनःप्रभृतिभिः करणादिरूपेण, के न हिंसन्तीत्याह-संयताः-साधवः, सुसमाहिता-उद्युक्ता इति ॥ २३५ ॥ अत्रैव हिंसादोषमाह-पुढवित्ति, पृथिवीकायं हिंसन्नालेखा(खना)दिना प्रकारेण हिनस्त्येव तुरवधारणार्थो व्यापादयत्येव तदाश्रितान्-पृथिव्याद्याश्रितान् त्रसांश्च विविधान् प्राणिनो-द्वीन्द्रियादीन् चशब्दात् स्थावरांश्चाप्कायादीन्, तांश्च चाक्षुषानचाक्षुषांश्च-चक्षुरिन्द्रियग्राह्यानग्राह्यांश्चेति ॥ २३६ ॥ यस्मादेवं तम्हत्ति, तस्मादेवं विज्ञाय दोषं तत्तदाश्रितजीवहिंसादिलक्षणं दुर्गतिवर्धनं-संसारवर्धनं पृथिवीकायसमारम्भमालेखनादि यावज्जीवमेव वर्जयेदिति ॥ २३७ ॥ उक्तः सप्तमस्थानविधिः, अधुनाऽष्टमस्थानविधिमधिकृत्योच्यते-आउकायंतीत्यादि, सूत्रत्रयमप्कायाभिलापेन ज्ञेयं ततश्चायमप्युक्त एव ॥ २३८-२४० ॥

तिक्खमन्नयरं सत्थं, सवओवि दुरासयं ॥ २४१ ॥
जायतेअं न इच्छंति, पावगं जलइत्तए । अहे दाहिणओ वावि, दहे उत्तरओवि अ ॥ २४२ ॥
पाईणं पडिणं वावि, उड्ढं अणुदिसामवि । तं पईवपयावट्ठा, संजया किंचि नारभे ॥ २४३ ॥
भूयाणमेसमाघाओ, हव्ववाहो न संसओ । तेउकायसमारंभं, जावजीवाइ वज्जए ॥ २४४ ॥
तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं ।

जाततेजाः–अग्निः तं जाततेजसं नेच्छन्ति, मनःप्रभृतिभिरपि पापकं–
साम्प्रतं नवमस्थानविधिमाह–जायतेयंति–जाततेजाः–अग्निः तं जाततेजसं नेच्छन्ति, मनःप्रभृतिभिरपि पापकं–पाप एव पापकस्तं, प्रभूतसत्त्वापकारित्वेनाशुभमित्यर्थः । किं नेच्छन्तीत्याह–ज्वालयितुं–उत्पादयितुं वृद्धिं वा नेतुं, किंविशिष्टमित्याह–तीक्ष्णं–छेदकरणात्मकं, अन्यतरशस्त्रं–सर्वशस्त्रं, एकधारादिशस्त्रव्यवच्छेदेन सर्वतोधारशस्त्रकल्पमिति भावः । अत एव सर्वतोऽपि दुराश्रयं सर्वतोधारत्वेनानाश्रणीयमिति ॥ २४१ ॥ एतदेव स्पष्टयन्नाह–पाईणंति, प्राच्यां प्रतीच्यां वापि–पूर्वायां पश्चिमायां चेत्यर्थः। ऊर्ध्वमनुदिक्ष्वपि "सुपां सुपो भवन्ती"ति, सप्तम्यर्थेष छी, विदिक्ष्वपीत्यर्थः, । अधो दक्षिणतश्चापि दहति–दाह्यं भस्मीकरोति, उत्तरतोऽपि च, सर्वासु दिक्षु विदिक्षु च दहतीति ॥ २४२ ॥ यतश्चैवमतः भूयाणंति, भूतानां–स्थावरादीनां एप आघातः आघातहेतुत्वादाघातः, हव्यवाहः–अग्निः न संशय इत्येवमेवैतद् आघात एवेतिभावः । येनैवं तेन तं हव्यवाहं प्रदीपप्रतापनार्थं–आलोकशीतापनोदार्थं संयताः–साधवः किञ्चित्सङ्घट्टनादिनाऽपि नारभन्ते, संयतत्वापगमनप्रसङ्गादिति ॥ २४३ ॥ यस्मादेवं तम्हत्ति व्याख्या पूर्ववत् ॥ २४४ ॥

अणिलस्स समारंभं, बुद्धा मन्नंति तारिसं । सावज्जबहुलं चेअं, नेअं ताईहि सेविअं ॥ २४५ ॥
तालिअंटेण पत्तेण, साहाविहुअणेण वा । न ते वीइउमिच्छंति, वेआवेऊण वा परं ॥ २४६ ॥
जंपि वत्थं व पायं वा, कंबलं पायपुंछणं । न ते वायमुईरंति, जयं परिहरंति अ ॥ २४७ ॥
तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं । वाउकायसमारंभं, जावज्जीवाइ वज्जए ॥ २४८ ॥

उक्तो नवमस्थानविधिः, साम्प्रतं दशममाश्रित्याह—अणिलस्स-अनिलस्य-वायोः समारम्भं-तालवृन्तादिभिः करणं बुद्धाः-तीर्थकरा मन्यन्ते-जानन्ति तादृशं-जाततेजःसमारम्भसदृशं, सावद्यबहुलं-पापभूयिष्ठं चेतमितिकृत्वा सर्वकालमेव नैनं त्रातृभिः-सुसाधुभिः सेवितं-आचरितं, मन्यन्ते बुद्धा एवेति ॥ २४५ ॥ एतदेव स्पष्टयति-तालिय- टेणंति, तालवृन्तेन पत्रेण शाखाविधूननेन वेत्यमीषां स्वरूपं यथा षड्जीवनिकायिकायां, न ते साधवो वीजितु- मिच्छन्त्यात्मानमात्मना, नापि वीजयन्ति परैरात्मानं तालवृन्तादिभिरेव, नापि वीजयन्तं परमनुमन्यन्त इति ॥ २४६ ॥ उपकरणात्तद्विराधनेत्येतत्परिहारमाह-जंपित्ति, यदपि वस्त्रं वा पात्रं वा कम्बलं वा पादपुञ्छनममीषां स्वरूपं पूर्वोक्तं धर्मोपकरणं यत्तेनापि न ते वातमुदीरयन्त्ययतप्रत्युपेक्षणादिक्रियया, किंतु यतं परिहरन्ति, परिभोग- परिहारेण धारणाया परिहारेण चेति ॥ २४७ ॥ यत एवायं सुसाधुवर्जितोऽनिलसमारम्भः, तम्हत्ति पूर्ववत् ॥ २४८ ॥

वणस्सइं न हिंसंति, मणसा वयसा कायसा । तिविहेण करणजोएणं, संजया सुसमाहिआ ॥२४९॥

वणस्सइं विहिंसंतो, हिंसई अ तयस्सिए । तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥ २५० ॥
तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं । वणस्सइसमारंभं, जावजीवाइ वज्जए ॥ २५१ ॥
तसकायं न हिंसंति, मणसा वयसा कायसा । तिविहेण करणजोएणं, संजया सुसमाहिआ ॥२५२॥
तसकायं विहिंसंतो, हिंसई उ तयस्सिए । तसे अ विविहे पाणे, चक्खुसे अ अचक्खुसे ॥ २५३ ॥
तम्हा एअं विआणित्ता, दोसं दुग्गइवड्ढणं । तसकायसमारंभं, जावजीवाइ वज्जए ॥ २५४ ॥

उक्तो दशमस्थानविधिः, इदानीं एकादशमाश्रित्योच्यत इति । वणस्सइं इत्यादि सूत्रत्रयं वनस्पत्यभिलापेन ज्ञेयं, ततश्चायमप्युक्त एव ॥ २४९-२५१ ॥ द्वादशस्थानविधिरुच्यते-तसकायमिति, त्रसकायं-द्वीन्द्रियादिरूपं न हिंसन्त्या-रम्भप्रवृत्त्यादिना प्रकारेण, मनसा वाचा कायेन-तदहितचिन्तनादिना, त्रिविधेन करणयोगेन-मनःप्रभृतिभिः कणादिना प्रकारेण, संयताः-साधवः, सुसमाहिता-उद्युक्ता इति ॥ २५२ ॥ तत्रैव हिंसादिदोषमाह—त्रसकायं विहिंसन्नारम्भप्रवृत्त्यादिना प्रकारेण हिनस्त्येव तुरवधारणार्थे व्यापादयत्येव तदाश्रितान्-त्रसाश्रितान् त्रसांश्च विविधान् प्राणिनस्तदन्यद्वीन्द्रियादीन्, चशब्दात् स्थावरांश्च पृथिव्यादीन्, चाक्षुषानचाक्षुषांश्च-चक्षुरिन्द्रियग्राह्यान-ग्राह्यांश्चेति सूत्रार्थः ॥ २५३ ॥ यस्मादेवं तम्हत्ति, तस्मादेतं विज्ञाय दोषं-तदाश्रितजीवहिंसालक्षणं दुर्गतिवर्धनं-संसारवर्धनं त्रसकायसमारम्भं तेन तेन विधिना यावज्जीवमेव वर्जयेदिति ॥ २५४ ॥

जाणि(इं) चत्तारि अभुज्जाइं, इसिणाऽऽहारमाइणि । ताइं तु विवज्जंतो, संजमं अणुपालए ॥२५५॥
पिंडं सिज्जं च वत्थं च, चउत्थं पायमेव य । अकप्पिअं न इच्छिज्जा, पडिगाहिज्ज कप्पिअं ॥२५६॥
जे निआगं ममायंति, कीअमुद्देसिआहडं । वहं ते समणुजाणंति, इअ उत्तं महेसिणा ॥ २५७ ॥
तम्हा असणपाणाइं, कीअमुद्देसिआहडं । वज्जयंति ठिअप्पाणो, निग्गंथा धम्मजीविणो ॥ २५८ ॥

उक्तो द्वादशस्थानविधिः, प्रतिपादितं कायषट्कम्, एतत्प्रतिपादनादुक्ता मूलगुणाः, अधुनैतद्वृत्तिभूतोत्तरगुणावसरः, ते चाकल्पादयः षडुत्तरगुणाः, यथोक्तं-"अकप्पो गिहिभायणं"ति, तत्राकल्पो द्विविधः-शिक्षकस्थापनाकल्पः अकल्पस्थापनाकल्पश्च । तत्र शिक्षकस्थापनाकल्पोऽनधीतपिण्डनिर्युक्त्यादिनाऽऽनीतमप्याहारादि न कल्पत इति, उक्तं च-"अणहीया खलु जेणं पिंडेसणसेज्जवत्थपाएसा । तेणाणियाणि जइणो कप्पंति न पिंडमाईणि ॥ १ ॥ उउबद्धंमि ण अणला वासावासे उ दोवि णो सेहा । दिक्खिज्जंती पायं ठवणाकप्पो इमो होइ ॥ २ ॥" अकल्पस्थापनाकल्पं त्वाह-जाणित्ति, यानि चत्वारि अभोज्यानि-संयमापकारित्वेनाकल्पनीयानि, ऋषीणां-साधूनामाहारादीन्याहारशय्यावस्त्रपात्राणि तानि तु विधिना विवर्जयन् संयमं-सप्तदशप्रकारं अनुपालयेत् तदत्यागे संयमाभावादिति ॥ २५५ ॥ एतदेव स्पष्टयति-पिंडंति, पिण्डं शय्यां च वस्त्रं च चतुर्थं पात्रमेव च, एतत्स्वरूपं प्रकटार्थं, अकल्पिकं नेच्छेत्प्रतिगृह्णीयात्कल्पिकं-यथोचितमिति ॥ २५६ ॥ अकल्पिके दोषमाह-जेत्ति, ये केचन द्रव्यसाध्वादयो द्रव्यलिङ्गधारिणो नियागंति नित्यमामन्त्रितपिण्डं

ममायंतीति परिगृह्णन्ति, तथा क्रीतमौद्देशिकाहृतमेतानि यथा क्षुल्लकाचारकथायाम्। वधं—त्रसस्थावरादिघातं ते—द्रव्यसाध्वादयः समनुजानन्ति दातृप्रवृत्त्यनुमोदनेनेत्युक्तं महर्षिणा—वर्द्धमानेनेति ॥ २५७ ॥ यस्मादेवं तम्हत्ति, तस्मादशनपानादि चतुर्विधमपि यथोदितं क्रीतमौद्देशिकमाहृतं वर्जयन्ति स्थितात्मानो—महासत्त्वाः निर्ग्रन्थाः—साधवो धर्मजीविनः—संयमैकजीविन इति ॥ २५८ ॥

कंसेसु कंसपाएसु, कुंडमोएसु वा पुणो। भुंजंतो असणपाणाइं, आयारा परिभस्सइ ॥ २५९ ॥

सीओदगसमारंभे, मत्तधोअणछड्डणे। जाइं छिप्पंति भूआइं, दिट्ठो तत्थ असंजमो ॥ २६० ॥

पच्छाकम्मं पुरेकम्मं, सिआ तत्थ न कप्पइ। एणमट्ठं न भुंजंति, निग्गंथा गिहिभायणे ॥ २६१ ॥

उक्तोऽकल्पस्तदभिधानात् त्रयोदशस्थानविधिः, इदानीं चतुर्दशस्थानविधिमाह—कंसेत्ति, कांसेषु—करोटकादिषु, कांस्य-पात्रेषु—तिलकादिषु, कुण्डमोदेषु—हस्तिपादाकारेषु मृन्मयादिषु, भुञ्जानोऽशनपानादि तदन्यदोषरहितमपि, आचारात्—श्रमणसम्बन्धिनः, परिभ्रश्यति—अपैतीति ॥ २५९ ॥ कथमित्याह—सीओदगत्ति, अनन्तरोदिष्टभाजनेषु श्रमणा भोक्ष्यन्ते इति तत्मात्रक-भुक्तं वैभिरिति शीतोदकेन धावनं कुर्वन्ति। तदाह—शीतोदकसमारम्भे—सचेतनोदकेन भाजनधावनारम्भे तत्मात्रक-धावनोज्झने—कुण्डमोदादिषु क्षालनजलत्यागे यानि क्षण्यन्ते—हिंस्यन्ते भूतानि—अप्कायादीनि, सोऽत्र—गृहिभाजनभोजने दृष्टः—उपलब्धः, केवलज्ञानभास्वता असंयमस्तस्य भोक्तुरिति ॥ २६० ॥ किंच पच्छाकम्मंति, पश्चात्कर्म पुरःकर्म

स्यात्तत्र–कदाचिद् भवेद् गृहिभाजनभोजने, पश्चात्कर्मपुरःकर्मभावस्तूक्तवदित्येके । अन्ये तु भुञ्जन्तु तावत्साधवो वयं तु पश्चाद्भोक्ष्यामहे इति पश्चात्कर्म, व्यत्ययेन तु पुरःकर्मेति व्याचक्षते । एतच्च न कल्पते धर्मचारिणां, यत एवमेतदर्थं–पश्चात्कर्मादिपरिहारार्थं न भुञ्जन्ते निर्ग्रन्थाः, केत्याह–गृहिभाजने यनन्तरोदित इति ॥ २६१ ॥

आसंदीपलिअंकेसु, मंचमासालएसु वा । अणायरिअमज्जाणं, आसइत्तु सइत्तु वा ॥ २६२ ॥

नासंदीपलिअंकेसु, न निसिज्जा न पीढए । निग्गंथाऽपडिलेहाए, बुद्धवुत्तमहिट्ठगा ॥ २६३ ॥

गंभीरविजया एए, पाणा दुप्पडिलेहगा । आसंदी पलिअंको अ, एअमट्ठं विवज्जिआ ॥ २६४ ॥

उक्तो गृहिभाजनदोषस्तदभिधानाच्चतुर्दशस्थानविधिः, इदानीं पञ्चदशस्थानविधिमाह–आसंदीति, आसन्दीपर्यङ्कौ प्रतीतौ तयोरासन्दीपर्यङ्कयोः, मञ्चाशालकयोश्च मञ्चः प्रतीतः, आशालकस्तु–अवष्टम्भसमन्वित आसनविशेषः, एतयोरनाचरितमनासेवितमार्याणां–साधूनामासितुं–उपवेष्टुं स्वप्तुं वा–निद्राविवाहनं वा कर्तुं, शुषिरादिदोषादिति ॥ २६२ ॥ अत्रैवापवादमाह–नासन्दीति, नासन्दीपर्यङ्कयोः प्रतीतयोर्न निषद्यायां–एकादिकल्परूपायां, न पीठके–वेत्रकाष्ठमयादौ निर्ग्रन्थाः–साधवः, अप्रत्युपेक्ष्य–चक्षुरादिना न निषीदनादि कुर्वन्ति इति वाक्यशेषः, नञ्सर्वत्राभिसम्बध्यते, न कुर्वन्तीति, किंविशिष्टा निर्ग्रन्थाः ?, इत्याह–बुद्धोक्ताधिष्ठातारः–तीर्थकरोक्तानुष्ठानपरा इत्यर्थः, इह चाप्रत्युपेक्षितासन्द्यादौ निषीदनादिनिषेधात् धर्मकथादौ राजकुलादिषु प्रत्युपेक्षितेषु निषीदनादिविधिमाह विशेषणान्यथानुपपत्तेरिति ॥ २६३ ॥ अत्रैव

दोषमाह-गंभीरत्ति, गम्भीरविजया, गम्भीरं-अप्रकाशं, विजयः-आश्रयः अप्रकाशाश्रया, एते-प्राणिनामासन्द्यादयः, एवं च प्राणिनो दुष्प्रत्युपेक्षणीया एतेषु भवन्ति, पीड्यन्ते च एतदुपवेशनादिना, आसन्दः पर्यङ्कश्च, चशब्दात् मञ्चादयश्चैतदर्थं विवर्जिताः साधुभिरिति ॥ २६४ ॥

गोअग्गपविट्ठस्स, निसिज्जा जस्स कप्पइ। इमेरिसमणायारं, आवज्जइ अबोहियं ॥ २६५ ॥
विवत्ती बंभचेरस्स, पाणाणं च वहे वहो। वणीमगपडिग्घाओ, पडिकोहो अगारिणं ॥ २६६ ॥
अगुत्ती बंभचेरस्स, इत्थीओ वावि संकणं। कुसीलवड्ढणं ठाणं, दूरओ परिवज्जए ॥ २६७ ॥
तिण्हमन्नयरागस्स, निसिज्जा जस्स कप्पई। जराए अभिभूअस्स, वाहिअस्स तवस्सिणो ॥ २६८ ॥

उक्तः पर्यङ्कस्थानविधिः, तदभिधानात्पञ्चदशस्थानम्, इदानीं षोडशस्थानमधिकृत्याह-गोअरग्गत्ति, गोचराग्रप्रविष्टस्य-भिक्षाप्रविष्टस्येत्यर्थः, निषद्या यस्य कल्पते, गृह एव निषीदनं यः समाचरति साधुरितिभावः, स खलु एनमीदृशं वक्ष्यमाणलक्षणं अनाचारमापद्यते-प्राप्नोति, अबोधिकं-मिथ्यात्वफलमिति ॥ २६५ ॥ अनाचारमाह-विवत्तित्ति, विपत्तिर्ब्रह्मचर्यस्य-आज्ञाखण्डनादोषतः साधुसमाचरणस्य, प्राणिनां च वधे वधो भवति, तथा सम्बन्धादाधाकर्मादिकरणेन, वनीपकप्रतीघातस्तदाक्षेपणादित्साभिधानादिना, प्रतिक्रोधश्चागारिणां तत्स्वजनानां च स्यात् तदाऽऽक्षेपदर्शनेनेति ॥ २६६ ॥ तथा अगुत्तित्ति, अगुप्तिर्ब्रह्मचर्यस्य तदिन्द्रियाद्यवलोकनेन, स्त्रीतश्चापि शङ्का भवति एतत्प्रफु-

ह्लोचनदर्शनादिना अनुभूतगुणायाः, कुशीलवर्धनं स्थानं-तदुक्तेन प्रकारेणासंयमवृद्धिकारकं, दूरतः परिवर्जयेत्-परित्यजेदिति ॥ २६७॥ सूत्रेणैवापवादमाह-तिण्हमिति, त्रयाणां वक्ष्यमाणलक्षणानां अन्यतरस्य एकस्य निषद्या गोचरप्रविष्टस्य गृहे यस्य कल्पते औचित्येन, तस्य तदासेवने न दोष इति वाक्यशेषः, कस्य पुनः कल्पत इत्याह-जरयाऽभिभूतस्यात्यन्तवृद्धस्य, व्याधिमतः-अत्यन्तमशक्तस्य, तपस्विनो-विकृष्टक्षपकस्य, एते च भिक्षाटनं न कार्यन्त एव, आत्मलब्धिकाद्यपेक्षया तु सूत्रविषयः, न चैतेषां प्राय उक्तदोषाः सम्भवन्ति, परिहरन्ति च वनीपकप्रतिघातादीति ॥ २६८॥

वाहिओ वा अरोगी वा, सिणाणं जो उ पत्थए। वुक्कंतो होइ आयारो, जढो हवइ संजमो ॥ २६९॥
संतिमे सुहुमा पाणा, घसासु भिलुगासु अ। जे अ भिक्खू सिणायंतो, विअडेणुप्पलावए ॥ २७०॥
तम्हा ते न सिणायंति, सीएण उसिणेण वा। जावज्जीवं वयं घोरं, असिणाणमहिट्ठगा ॥ २७१॥
सिणाणं अदुवा कक्कं, लुद्धं पउमगाणि अ। गायस्सुव्वट्टणट्ठाए, नायरंति कयाइवि ॥ २७२॥

उक्तो निषद्यास्थानविधिः, तदभिधानात्षोडशस्थानं, साम्प्रतं सप्तदशस्थानमाह-वाहिओ वेति, व्याधिमान्-व्याधिग्रस्तः, अरोगी वा-रोगविप्रमुक्तो वा, स्नानं-अङ्गप्रक्षालनं, यस्तु प्रार्थयते-सेवत इत्यर्थः, तेनेत्थम्भूतेन व्युत्क्रान्तो भवति आचारो-बाह्यतपोरूपः, अस्नानपरीषहानतिसहनात्, जढः-परित्यक्तो भवति, संयमः-प्राणिनां रक्षणादिकोऽप्कायादिविराधनादिति ॥ २६९॥ प्रासुकस्नानेन कथं संयमपरित्याग इत्याह-संतिमे, सन्त्येते प्रत्यक्षोपलभ्यमानस्वरूपाः,

सूक्ष्माः–श्लक्ष्णाः, प्राणिनो–द्वीन्द्रियादयः, घसासु–शुषिरभूमिषु, भिलुकासु च–तथाविधभूमिराजीषु च, यांस्तु भिक्षुः स्नपयन् स्नानजलोज्झनक्रियया विकृतेन–प्रासुकोदकेनोत्प्लावयति, तथा च तद्विराधनातः संयमपरित्याग इति ॥२७०॥ निगमयन्नाह–तम्हत्ति, यस्मादेवमुक्तदोषप्रसङ्गस्तस्मात्ते साधवो न स्नान्ति शीतोदकेनोष्णोदकेन वा प्रासुकेना-प्रासुकेन वेत्यर्थः। किंविशिष्टास्त इत्याह–यावज्जीवं–आजन्म, व्रतं घोरं–दुरनुचरमस्नानमाश्रित्य अधिष्ठातारः–अस्यैव कर्तार इति ॥ २७१ ॥ किं च–सिणाणन्ति, स्नानं पूर्वोक्तं, अथवा कल्कं–चन्दनादि, लोध्रं–गन्धद्रव्यं, पद्मकानि च–कुङ्कुमकेसराणि, चशब्दादन्यच्चैवंविधं गात्रस्योद्वर्त्तनार्थं–उद्वर्त्तननिमित्तं नाचरन्ति कदाचिदपि–यावज्जीवमिति भावसाधव इति ॥ २७२ ॥

नगिणस्स वावि मुंडस्स, दीहरोमनहंसिणो। मेहुणा उवसंतस्स, किं विभूसाइ कारिअं? ॥ २७३ ॥
विभूसावत्तिअं भिक्खू, कम्मं बंधइ चिक्कणं। संसारसागरे घोरे, जेणं पडइ दुरुत्तरे ॥ २७४ ॥
विभूसावत्तिअं चेअं, बुद्धा मन्नंति तारिसं। सावज्जबहुलं चेअं, नेयं ताईहिं सेविअं ॥ २७५ ॥

उक्तोऽस्नानविधिः, तदभिधानात्सप्तदशं स्थानं, साम्प्रतमष्टादशं शोभावर्जनास्थानमुच्यते–शोभायां नास्ति दोषः, "अलङ्कृतश्चापि धर्ममाचरेदि"त्यादिवचनात् पराभिप्रायमात्रमाशङ्क्याह–नगिणस्ति–नग्नस्यापि–कुचेलवतोऽपि उपचार-नग्नस्य निरुपचरितस्य नग्नस्य वा जिनकल्पिकस्येति सामान्यविषयमेव सूत्रं, मुण्डस्य–द्रव्यभावाभ्यां, दीर्घरोमनखवतः–

दीर्घरोमवतः कक्षादिषु, दीर्घनखवतो हस्तादौ जिनकल्पिकस्य, इतरस्य तु प्रमाणयुक्ता एव नखा भवन्ति यथाऽन्यसाधूनां शरीरेषु तमस्यपि न लगन्ति। मैथुनादुपशान्तस्योपरतस्य किं विभूषया-राढया प्रयोजनं (कार्यं)?, न किञ्चिदिति ॥ २७३ ॥ इत्थं प्रयोजनाभावमभिधायापायमाह-विभूसत्ति, विभूषाप्रत्ययं-विभूषानिमित्तं भिक्षुः-साधुः कर्म बध्नाति चिक्कणं-दारुणं संसारसागरे घोरे-रौद्रे येन कर्मणा पतति दुरुत्तरे-अकुशलानुबंधतोऽत्यन्तदीर्घ इति ॥ २७४ ॥ एवं बाह्यविभूषापायमभिधाय सङ्कल्पविभूषापायमाह-विभूसावत्ति, विभूषाप्रत्ययं-विभूषानिमित्तं चेत एवं च यदि मम विभूषा सम्पद्यत इति, तत्प्रवृत्यङ्गं चित्तमित्यर्थः, बुद्धाः—तीर्थकरा मन्यन्ते-जानन्ति तादृशं रौद्र-कर्मबन्धहेतुभूतं विभूषाक्रियामहितं (सदृशं) सावद्यबहुलं चैतदार्तध्यानानुगतं चेतः, नैतदित्थम्भूतं त्रातृभिरात्मारामैरार्यैः साधुभिः सेवितमाचरितं, कुशलचित्तत्वात्तेषामिति ॥ २७५ ॥

खवंति अप्पाणममोहदंसिणो, तवे रया संजमअज्जवे गुणे।
धुणंति पावाइं पुरेकडाइं, नवाइं पावाइं न ते करंति ॥ २७६ ॥
सओवसंता अममा अकिंचणा, सविज्जविज्जाणुगया जसंसिणो।
उउप्पसन्ने विमलेव चंदिमा, सिद्धिं विमाणाइं उवेंति ताइणो ॥ २७७ ॥ त्तिबेमि।

छट्ठं धम्मत्थकामज्झयणं समत्तं ६ ॥

उक्तः शोभावर्जनस्थानविधिस्तदभिधानादष्टादशं पदं, तदभिधानाच्चोत्तरगुणाः, साम्प्रतमुक्तफलप्रदर्शनेनोपसंहरन्नाह—
खवंतिंत्ति, क्षपयन्त्यात्मानं तेन तेन चित्तयोगेनानुपशान्तं शमयोजनेन जीवं, किंविशिष्टा इत्याह—अमोहदर्शिनः—
अमोहं ये पश्यन्ति, यथावत्पश्यन्ति य इत्यर्थः, त एव विशेष्यन्ते—तपसि—अनशनादिलक्षणे रताः—सक्ताः, किंविशिष्टे
तपसीत्याह—संयमार्जवगुणे प्राकृतत्वादेकारः संयमार्जवे गुणौ यस्य तपसस्तस्मिन्, संयमऋजुभावप्रधाने शुद्ध इत्यर्थः, ते
एवंभूता धुन्वन्ति—कम्पयन्ति अपनयन्ति, पापानि पुराकृतानि—जन्मान्तरोपात्तानि, नवानि—प्रत्यग्राणि पापानि न ते
साधवः कुर्वन्ति, तथा अप्रमत्तत्वादिति ॥ २७६ ॥ किं च सओवसंतन्ति, सदोपशान्ताः—सर्वकालमेव क्रोधरहिताः
अममाः—सर्वत्र ममत्वशून्याः, अकिञ्चना—हिरण्यादिमिथ्यात्वादिद्रव्यभावकिञ्चनविनिर्मुक्ताः, स्वा—आत्मीया विद्या
स्वविद्या—परलोकोपकारिणी केवलश्रुतरूपा तया स्वविद्यया विद्यया अनुगता—युक्ताः, न पुनः परविद्यया इहलोकोप-
कारिण्येति, त एव विशेष्यन्ते—यशस्विनः—शुद्धपारलौकिकयशोवन्तः, त एवंभूता ऋतौ प्रसन्ने—परिणते शरत्कालादौ
विमल इव चन्द्रमाः—चन्द्रमा इव विमलाः, इत्येवंकल्पास्ते भावमलरहिताः सिद्धिं—निर्वृत्तिं तथा सावशेषकर्माणो विमा-
नानि—सौधर्मावतंसकादीन्युपयान्ति—सामीप्येन गच्छन्ति त्रातारः—स्वपरापेक्षया साधव इति ॥२७७॥ ब्रवीमीति पूर्ववदेव ॥

दशवैकालिकश्रुतस्कन्धषष्ठाध्ययनव्याख्या समाप्तेति ॥ ६ ॥

व्याख्यातं महाचारकथाध्ययनं, इदानीं वाक्यशुद्ध्याख्यमध्ययनमारभ्यते, अस्य चायमभिसम्बन्धः इहानन्तराध्ययने गोचरप्रविष्टेन सता स्वाचार पृष्टेन तद्विदाऽपि न महाजनसमक्षं तत्रैव विस्तरतः कथयितव्यमिति, अपि त्वालये गुरवो वा कथयन्तीति वक्तव्यमित्येतदुक्त, इह त्वालयगतेनापि तेन गुरुणा वा वचनदोषगुणाभिज्ञेन निरवद्यवचसा कथयितव्यमित्येतदुच्यत, उक्तं च—"मारूअणवज्ञाण"मिति अनेन सम्बन्धेनायातमिदमध्ययनमिति, तच्चेदम्—

चउण्हं खलु भासाणं, परिसंखाय पन्नवं। दुण्हं तु विणयं सिक्खे, दो न भासिज्ज सव्वसो ॥ २७८॥

जा अ सच्चा अवत्तव्वा, सच्चामोसा अ जा मुसा। जा अ बुद्धेहिं णाइण्णा, न तं भासिज्ज पन्नवं ॥२७९॥

असच्चमोसं सच्चं च, अणवज्जमकक्कसं। समुप्पेहमसंदिद्धं, गिरं भासिज्ज पन्नवं ॥ २८० ॥

एअं च अट्ठमन्नं वा, जं तु नामेइ सासयं। स भासं सच्चमोसंपि, तंपि धीरो विवज्जए ॥ २८१ ॥

चउण्हंति, चतसृणां, खलुशब्दोऽवधारणे, चतसृणामेव, नातोऽन्या भाषा विद्यत इति। भाषाणां–सत्यादीनां परिसङ्ख्याय–सर्वैः प्रकारैर्ज्ञात्वा, स्वरूपमिति वाक्यशेषः। प्रज्ञावान्–प्राज्ञो बुद्धिमान् साधुः, किमित्याह–द्वाभ्यां सत्यासत्यामृषाभ्यां, तुरवधारणे द्वाभ्यामेव आभ्यां विनयं–शुद्धप्रयोगं विनीयतेऽनेन कर्म्मेतिकृत्वा शिक्षेत–जानीयात्, द्वे–असत्यासत्यामृषे न भाषेत सर्वशः–सर्वैः प्रकारैरिति ॥ २७८ ॥ विनयमेवाह–जा य सच्चत्ति, या च सत्या पदार्थतत्त्वमङ्गीकृत्य अवक्तव्या–अनुच्चारणीया सावद्यत्वेन–अमुत्र स्थिता पल्लीरिति कौशिकभाषावत्, सत्यामृषा वा यथा–दश दारका जाता

च, वशब्दस्य व्यवहितः सम्बन्धः, या च बुद्धैः–तीर्थकरगणधरैरनाचरिता असत्यामृषा–
इत्येवंलक्षणा, मृषा च संपूर्णैव, चशब्दस्य व्यवहितः सम्बन्धः, न तां भाषेत, नेत्थंभूतां वाचमुदाहरेत् प्रज्ञावान्–बुद्धिमान्
आमन्त्रण्याज्ञापन्यादिलक्षणा अविधिपूर्वकं स्वरादिना प्रकारेण, न तां भाषेत, नेत्थंभूतां वाचमुदाहरेत् प्रज्ञावान्–बुद्धिमान्
साधुरिति सूत्रार्थः ॥ २७९ ॥ यथाभूता अवाच्या भाषा तथाभूतोक्ता, साम्प्रतं यथाभूता वाच्या तथाभूतामाह–असच्च-
मोसन्ति, असत्यामृषामुक्तलक्षणां, सत्यां चोक्तलक्षणामेव, इयं च सावद्यापि सकर्कशापि भवत्यत आह–असावद्यां—
अपापां, अकर्कशामतिशयोक्त्या ह्यमत्सरपूर्वां, संप्रेक्ष्य–स्वपरोपकारिणीति बुद्ध्या आलोच्यासंदिग्धां–स्पष्टामक्षेपेण प्रति-
पत्तिहेतुं, गिरं–वाचं, भाषेत–ब्रूयात्, प्रज्ञावान्–बुद्धिमान् साधुरिति ॥ २८० ॥ साम्प्रतं सत्यासत्यामृषाप्रतिषेधार्थमाह–
एयं चत्ति, एतं चार्थमनन्तरप्रतिषिद्धं सावद्यकर्कशविषयमन्यं वा, एवंजातीयं प्राकृतशैल्या यस्तु नामयति शाश्वतं, य एव
कश्चिदर्थो नामयति–अननुगुणं करोति, शाश्वतं–मोक्षं, तमाश्रित्य स साधुः पूर्वोक्तभाषाभाषकत्वेनाधिकृतो भाषां सत्या-
मृषामपि पूर्वोक्तां, अपिशब्दात् सत्यापि या तथाभूता तामपि धीरो–बुद्धिमान् विवर्जयेत्–न ब्रूयादिति भावः । आह–
सत्यामृषाभाषाया ओघत एव प्रतिषेधात्तथाविधसत्यायाश्च सावद्यत्वेन गतार्थं सूत्रमिति, उच्यते, मोक्षपीडाकरं सूक्ष्ममप्यर्थं
अङ्गीकृत्यान्यतरभाषाभाषणमपि न कर्त्तव्यमित्यतिशयप्रदर्शनपरमेतददुष्टमेवेति ॥ २८१ ॥

वितहंपि तहामुत्तिं, जं गिरं भासए नरो। तम्हा सो पुट्ठो पावेणं, किं पुणं जो मुसं वए ॥२८२॥
तम्हा गच्छामो वक्खामो, अमुगं वा णे भविस्सइ। अहं वा णं करिस्सामि, एसो वा णं करिस्सइ ॥२८३॥

एवमाइ उ जा भासा, एसकालंमि संकिया । संपयाईअमट्ठे वा, तंपि धीरो विवज्जए ॥ २८४ ॥

साम्प्रत मृषाभाषासरक्षणार्थं आह–वितहंपि, वितथ–अतथ्य तथामूर्त्यपि–कथञ्चित्तत्स्वरूपमपि वस्तु, अपिशब्द–
स्य व्यवहित. सम्बन्ध', एतदुक्त भवति–पुरुषनपथ्यस्थितवनिताद्यप्यङ्गीकृत्य या गिर भाषते नरः, इय स्त्री आगच्छति
गायति चेत्यादिरूपा, तस्माद्भाषणादनन्तरभूतात्पूर्वमेवासौ वक्ता भाषणाभिसन्धिकाल स्पृष्टः पापेन–बद्धः कर्मणा,
किं पुनर्यो मृषा वक्ति ?, भूतोपघातिनीं वाच म सुतरां बाध्य( बद्ध्य )त इति ॥ २८२ ॥ तम्हत्ति, यस्माद्वितथं तथामूर्त्यपि
वस्त्वङ्गीकृत्य भाषमाणा बध्यत तस्माद्गमिष्याम एव श्व इतोऽन्यत्र, वक्ष्याम एव श्वस्तत्तदौपधनिमित्तमिति, अमुकं वा नः
कार्यं नमत्याद्वि भविष्यत्येव, अह चेद लोचादि करिष्यामि नियमेन, एष वा साधुरस्माकं विश्रामणादि करिष्यत्येवेति
॥ २८३ ॥ एवमाइ उ इति, एवमाद्या तु या भाषा, आदिशब्दात् पुस्तकं ते दास्याम्यवेत्यवमादिपरिग्रहः, एष्यत्काले–
भविष्यत्कालविषया, बहुविघ्नत्वान्मुहूर्त्तादीनां शङ्किता–किमिदमित्थमेव भविष्यत्युतान्यथेत्यनिश्चितगोचरा, तथा
साम्प्रतातीतार्थयोरपि या शङ्किता, साम्प्रतार्थे स्त्रीपुरुषाविनिश्चये एष पुरुष इति, अतीतार्थेऽप्येवमेव बलीवर्दतत्क्रियाद्यनिश्चये
तदात्र गौरस्माभिर्दृष्ट इति । याप्येवभूता भाषा शङ्किता तामपि धीरो विवर्जयेत्, तत्तथाभावनिश्चयाभावेन व्यभिचारतो
मृषात्वोपपत्तेर्विक्षितोऽगमनादौ गृहस्थमध्ये लाघवादिप्रसङ्गात्, सर्वमेव सावसर वक्तव्यमिति ॥ २८४ ॥ किं च—

अईअंमि अ कालंमि, पच्चुप्पण्णमणागए । जमट्ठं तु न जाणिज्जा, एवमेअंति नो वए ॥ २८५ ॥

अईयंमि अ कालंमि, पच्चुप्पण्णमणागए । जत्थ संका भवे तं तु, एवमेअंति नो वए ॥ २८६ ॥
अईयंमि अ कालंमि, पच्चुप्पण्णमणागए । निस्संकिअं भवे जं तु, एवमेअं तु निद्दिसे ॥ २८७ ॥

अईअंमि इति, अतीते च काले तथा प्रत्युत्पन्ने-वर्त्तमाने अनागते च यमर्थं तु न जानीयात्सम्यगेव-मयमिति, तमङ्गीकृत्यैवमेतदिति न ब्रूयादिति, अयमज्ञातभाषणप्रतिषेधः ॥ २८५ ॥ तथा-अईयम्मि-अतीते च काले प्रत्युत्पन्नेऽनागते यत्रार्थे शङ्का भवेदिति तमप्यर्थमाश्रित्यैवमेतदिति न ब्रूयादिति, अयमपि विशेषतः शङ्कितभाषण-प्रतिषेधः ॥ २८६ ॥ अईयंमि, अतीते च काले प्रत्युत्पन्ने अनागते निःशङ्कितं भवेत्, यदर्थजातं तुशब्दात् अनवद्यं, तदेवमेतदिति निर्दिशेत्, अन्ये पठन्ति-स्तोकस्तोकमिति, तत्र परिमितया वाचा निर्दिशेदिति ॥ २८७ ॥

तहेव फरुसा भासा, गुरुभूओवघाइणी । सच्चावि सा न वत्तव्वा, जओ पावस्स आगमो ॥ २८८ ॥
तहेव काणं काणत्ति, पंडगं पंडगत्ति वा । वाहिअं वावि रोगित्ति, तेणं चोरत्ति नो वए ॥ २८९ ॥
एएणऽन्नेण अट्ठेणं, परो जेणुवहम्मइ । आयारभावदोसन्नू, न तं भासिज्ज पन्नवं ॥ २९० ॥
तहेव होले गोलित्ति, साणे वा वसुलित्ति अ । दमए दुहए वावि, नेवं भासिज्ज पन्नवं ॥ २९१ ॥
अज्जिए पज्जिए वावि, अम्मो माउसिअत्ति अ । पिउस्सिए भायणिज्जत्ति, धूए णत्तुणिअत्ति अ ॥ २९२ ॥

हले हलित्ति अन्नित्ति, भट्टे सामिणि गोमिणि। होले गोले वसुलित्ति, इत्थिअं नेवमालवे ॥ २९३ ॥
नामधिज्जेण णं बूआ, इत्थीगुत्तेण वा पुणो। जहारिहमभिगिज्झ, आलविज्ज लविज्ज वा ॥ २९४ ॥
अज्जए पज्जए वावि, बप्पो चुल्लपिउत्ति अ। माउलो भाइणिज्जत्ति, पुत्ते णत्तुणिअत्ति अ ॥ २९५ ॥
हे भो हलित्ति अन्नित्ति, भट्टे सामिअ गोमिअ। होल गोल वसुलित्ति, पुरिसं नेवमालवे ॥ २९६ ॥
नामधिज्जेण णं बूआ, पुरिसगुत्तेण वा पुणो। जहारिहमभिगिज्झ, आलविज्ज लविज्ज वा ॥ २९७ ॥

तहेवत्ति, तथैव, परुषा भाषा-निष्ठुरा भावस्नेहरहिता गुरुभूतोपघातिनी-महाभूतोपघातवती, यथा [ भवति तथा ] कश्चित्कस्यचित् कुलपुत्रत्वेन प्रतीतस्य दासमित्यभिदधतः, सर्वथा सत्यापि सा बाह्यार्थतथाभावमङ्गीकृत्य न वक्तव्या, यतो यस्या भाषायाः सकाशात्पापस्यागमः-अकुशलबन्धो भवति ॥ २८८ ॥ तहेवत्ति, तथैवेति पूर्ववत्, काणं-भिन्नाक्षं काण इति, तथा पण्डकं-नपुंसकं पण्डक इति वा, व्याधिमन्तं वापि रोगीति, स्तेनं-चौरं चौर इति नो वदेत्, अप्रीतिलज्जानाशस्थिररोगवृद्धिविराधनादिदोषप्रसङ्गादिति ॥ २८९ ॥ एएणं ति, एतेनान्येन वाऽर्थेनोक्तेन मता परो येनोपहन्यते, येन केनचित्प्रकारेण। आचारभावदोषज्ञो यतिर्न तं भाषेत प्रज्ञावान् तमर्थमिति ॥ २९० ॥ तहेव त्ति, तथैव, होले गोले इति श्वा वा वसुल इति, द्रमको दुर्भगश्चापि नैवं भाषेत प्रज्ञावान्, इह होलादिशब्दास्तद्देशप्रसिद्धितो नैष्ठुर्यादिवाचका अतस्तत्प्रतिषेध इति ॥ २९१ ॥ एवं स्त्रीपुरुषयोः सामान्येन भाषणप्रतिषेधं कृत्वा

अधुना स्त्रियमधिकृत्याह–अज्जिएत्ति, आर्यि(र्जि)के प्रार्यि(र्जि)के वापि अम्ब मातृष्वस इति च पितृष्वसः भागिनेयीति, दुहितः नप्तृ इति च, एतानि स्त्र्यामन्त्रणवचनानि वर्त्तन्ते, तत्र मातुः पितुर्वा माता आर्यिका, तस्या अपि या अन्या माता सा प्रार्यिका, शेषाभिधानानि प्रकटार्थानि एवेति सूत्रार्थः ॥ २९२ ॥ किंच–हले हलेत्ति, हले इत्येवं अन्ने इत्येवं तथा भट्टे स्वामिनि गोमिनि, तथा हले गोले वसुले इत्येतान्यपि नानादेशापेक्षया स्त्र्यामन्त्रणवचनानि गौरवकुत्सादिगर्भाणि वर्त्तन्ते, यतश्चैवमतः स्त्रियं नैवं हो(ह)लादिशब्दैरालपेदिति, दोषाश्चैवमालपनं कुर्वतः सङ्गगर्हितप्रद्वेषप्रवचनलाघवादय इति ॥ २९३ ॥ यदि नैवमालपेत् कथं तर्हि आलपेदित्याह–नामधिज्जेणन्ति, नामधेयेनेति–नाम्नैव नामधेयेनैनां ब्रूयात्, स्त्रियं कचित्कारणे, यथा देवदत्ते ! इत्येवमादि, नामास्मरणादौ गोत्रेण वा पुनर्ब्रूयात् स्त्रियं, यथा काश्यपगोत्रे ! इत्येवमादि, यथार्हं–यथायोग्यं वयोदेशैश्वर्याद्यपेक्षया अभिगृह्य–गुणदोषानालोच्यालपेल्लपेद्वा, ईषत्सकृद्वा लपनं आलपनं, लपनमतोऽन्यथा, तत्र वयोवृद्धा मध्यदेशे ईश्वरा धर्मप्रिया, अन्यत्रोच्यते धर्मशीले इत्यादि, अन्यथा च यथा न लोकोपघात इति ॥ २९४ ॥ उक्तः स्त्रियमधिकृत्यालपनप्रतिषेधो विधिश्च, साम्प्रतं पुरुषमधिकृत्याह–अज्जए पज्जएत्ति, आर्यकः प्रार्यकश्चापि बप्पचुल्लपितेति च, तथा मातुल भागिनेयेति, पुत्र नप्त इति च, इह भावार्थः स्त्रियामिव द्रष्टव्यः, नवरं चुल्लबप्पः–पितृव्योऽभिधीयत इति ॥ २९५ ॥ किंच–हे भो हलित्ति, अन्नेत्ति भट्ट स्वामिन् गोमिन् होल गोल वसुलित्ति पुरुषं नैवमालपेदित्यत्रापि भावार्थः पूर्ववदेवेति ॥ २९६ ॥ यदि नैवमालपेत्कथं तर्ह्यालपेदित्याह–नामधिज्जेणं ति पूर्ववदेव, नवरं पुरुषाभिलापेन योजना कार्येति ॥ २९७ ॥

पंचिंदिआण पाणाण, एस इत्थी अयं पुमं । जाव णं न विजाणिज्जा, ताव जाइत्ति आलवे ॥ २९८ ॥
तहेव माणुसं पसुं, पक्खिं वावि सरीसवं । थूले पमेइले वज्झे, पाइ(य)मित्ति अ नो वए ॥ २९९ ॥
परिवूढत्ति णं बूआ, बूआ उवचिअत्ति अ । संजाए पीणिए वावि, महाकायत्ति आलवे ॥ ३०० ॥
तहेव गाओ दुज्झाओ, दम्मा गोरहगत्ति अ । वाहिमा रहजोगित्ति, नेवं भासिज्ज पन्नवं ॥ ३०१ ॥
जुवं गवित्ति णं बूआ, धेणुं रसदयत्ति अ । रहस्से महल्लए वावि, वए संवहणित्ति अ ॥ ३०२ ॥

उक्तः पुरुषमप्याश्रित्यालपनप्रतिषेधो विधिश्च, अधुना पञ्चेन्द्रियतिर्यग्गत वाग्विधिमाह–पंचिंदियाणंति, पञ्चेन्द्रियाणां प्राणिनां गवादीनां क्वचिद्विप्रकृष्टदेशावस्थितानामेषा स्त्री गौरयं पुमान् बलीवर्दः, यावदेतद्विशेषेण न विजानीयात् मार्गप्रश्नादौ प्रयोजने उत्पन्ने सति जातिमाश्रित्यालपेत्, अस्माद् गोरूपजातात् कियद्दूरेणेत्येवमादि, अन्यथा लिङ्गव्यत्ययसम्भवात् मृषावादापत्तिः, गोपालादीनामपि विपरिणाम इत्येवमादयो दोषा इति, आक्षेपपरिहारौ तु वृद्धविवरणादवसेयौ, तच्चेदं “जइ लिंगवच्चए दोसो ता कीस पुढवाईए नपुंसगत्तेऽवि, पुरिसित्थिनिद्देसो पयट्टइ, जहा पत्थरो मट्टिया करओ उरगा छुच्छुरो नाला धाओ धाउली अंबओ अंबिलिआ, किमिओ जलूगा मक्कोडओ कीडिया भमरओ मच्छिया इच्चेवमादि ?, आयरिओ आह–जणवयसच्चेण ववहारसच्चेण य एवं पयट्टइत्ति न इत्थ दोसो, पंचिदिएसु पुण ण एयमणीसरइ, गोपालादीणवि य बुद्धिदूषणमिति विपरिणामसंभवाओ, पुच्छियसामायारिकहणे वा गुणसंभवादिति ” ॥ २९८ ॥ किंच–

तहेवत्ति, तथैव यथैवोक्तं प्राक्, मानुष्यं-आर्यादिकं, पशुं-अजादिकं, पक्षिणं वापि-हंसादिकं, सरीसृपं-अज-
गरादिकं, स्थूलः-अत्यन्तमांसलोऽयं मनुष्यादिः, तथा प्रमेदुरः-प्रकर्षेण मेदःसम्पन्नः तथा वध्यो-व्यापादनीयः पाक्य
इति च नो वदेत्, पाक्यः-पाकप्रायोग्यः, कालप्राप्त इत्यन्ये, नो वदेत्-न ब्रूयात् तदप्रीतितद्व्यापत्त्याशङ्कादिदोष-
प्रसङ्गादिति ॥ २९९ ॥ कारणे पुनरुत्पन्ने एवं वदेदित्याह-परिवूढत्ति, परिवृद्ध इति एनं-स्थूलं मनुष्यादिं ब्रूयात् , तथा
ब्रूयादुपचित इति च, संजातः प्रीणितश्चापि सस्निग्धः महाकाय इति चालपेत् परिवृद्धं, पलोपचितं परिहरेदित्यादावविति
॥ ३०० ॥ किंच-तहेवत्ति, तथैव यथैव गावो दोह्या-दोहार्हा-दोहसमय आसां वर्त्तत इत्यर्थः, दम्या-दमनीया
गोरथका इति च, गोरथकाः कल्होडकास्तथा वाह्याः सामान्येन ये कचित्तानाश्रित्य रथयोग्या इति च नैवं भाषेत
प्रज्ञावान् साधुः, अधिकरणलाघवादिदोषादिति ॥ ३०१ ॥ प्रयोजने तु कचिदेवं भाषेतेत्याह-जुवं गवेत्ति, युवा गौरिति
दम्यो गौर्युवेति ब्रूयात्, धेनुं-गां रसदेति च ब्रूयात्, रसदा गौरिति, तथा ह्रस्वं महल्लकं वापि गोरथकं ह्रस्वं वाह्यं
महल्लकं वदेत्, संवहनमिति च रथयोग्यं संवहनं वदेत्, कचिद्दिगुपलक्षणादौ प्रयोजन इति ॥ ३०२ ॥

तहेव गंतुमुज्जाणं, पव्वयाणि वणाणि अ । रुक्खा महल्ल पेहाए, नेवं भासिज्ज पन्नवं ॥ ३०३ ॥
अलं पासायखंभाणं, तोरणाण गिहाण अ । फलिहऽग्गलनावाणं, अलं उदगदोणिणं ॥ ३०४ ॥
पीढए चंगवेरे(रा) अ, नंगले मइयं सिआ । जंतलट्ठी व नाभी वा, गंडिआ व अलं सिआ ॥ ३०५ ॥

आसणं सयणं जाणं, हुज्जा वा किंचुवस्सए । भूओवघाइणिं भासं, नेवं भासिज्ज पन्नवं ॥ ३०६ ॥
तहेव गंतुमुज्जाणं, पव्वयाणि वणाणि अ । रुक्खा महल्ल पेहाए, एवं भासिज्ज पन्नवं ॥ ३०७ ॥
जाइमंता इमे रुक्खा, दीहवट्टा महालया । पजायसाला विडिमा, वए दरिसणित्ति अ ॥ ३०८ ॥
तहा फलाइं पक्काइं, पायखज्जाइं नो वए । वेलोइयाइं टालाइं, वेहिमाइ त्ति नो वए ॥ ३०९ ॥
असंथडा इमे अंबा, बहुनिव्वडिमाफला । वइज्ज बहुसंभूआ, भूअरूवत्ति वा पुणो ॥ ३१० ॥
तहेवोसहिओ पक्काओ, नीलिआओ छवीइ अ । लाइमा भज्जिमाउत्ति, पिहुखज्ज त्ति नो वए ॥ ३११ ॥
(त्रि)रूढा बहुसंभूआ, थिरा ओसढावि अ । गब्भिआओ पसूआओ, संसाराउत्ति आलवे ॥ ३१२ ॥

तहेव गंतुमिति, तथैवेति पूर्ववत्, गत्वा उद्यानं-जनक्रीडास्थानं तथा पर्वतान् प्रतीतान् तथा वनानि च, तत्र वृक्षान्महतो-महाप्रमाणान् प्रेक्ष्य-दृष्ट्वा नैवं भाषेत प्रज्ञावान्-साधुरिति ॥ ३०३ ॥ कथमित्याह-अलमिति, अलं-पर्याप्ता एते वृक्षाः प्रासादस्तम्भयोः, अत्रैकस्तम्भः प्रासादः, स्तम्भस्तु स्तम्भ एव, तयोरलं, तथा तोरणानां-नगरतोरणादीनां गृहाणां च-कुटीरकादीनामलमिति योगः, तथा परिघार्गलानावां वा तत्र नगरद्वारे परिघः, गोपुर-कपाटादिषु अर्गला, नौः प्रतीता, आसां अलं एते वृक्षाः, तथोदकद्रोणीनामलं, उदकद्रोण्योऽरहट्टजलधारिका इति ॥३०४॥

तथा पीढए इति, पीठकायालमेते वृक्षाः, पीठकं प्रतीतं तदर्थं, "सुपां सुपो भवन्ती"ति चतुर्थ्यर्थे प्रथमा, एवं सर्वत्र योजनीयं, तथा चंगबेरा येत्ति चंगबेरा–काष्ठपात्री तथा नङ्गलेत्ति नांगलं–हलं, तथा अलं मयिकाय स्यात्, मयिकं–उप्तबीजाच्छादनं, तथा यन्त्रयष्टये वा, यंत्रयष्टिः प्रसिद्धा, नामये वा, नाभिः–शकटरथाङ्ग गण्डिकायै वाऽलं स्युरेते वृक्षा इति, नैवं भाषेत प्रज्ञावानिति वर्त्तते, गण्डिका सुवर्णकाराणामधिकरणी स्थापनी भवतीति ॥३०५॥ तथा आसणंति, आसनं–आसन्दकादि, शयनं–पर्यङ्कादि, यानं–युग्यादि, भवेद्वा किंचिदुपाश्रये–वसतावन्यद्वा द्वारपात्राद्येतेषु वृक्षेष्विति, भूतोपघातिनीं–सत्त्वपीडाकारिणीं भाषां नैव भाषेत प्रज्ञावान् साधुरिति, दोषाश्चात्र तद्वनस्वामी व्यन्तरादिः कुप्येत्, सलक्षणो वा वृक्ष इत्यभिगृह्णीयात्, अनियमितभाषिणो लाघवं चेत्येवमादयो योज्याः ॥ ३०६ ॥ अत्रैव विधिमाह–तहेवत्ति, वस्तुतः पूर्ववदेव, नवरमेवं भाषेत ॥ ३०७ ॥ जाइमंतत्ति, जातिमन्तः–उत्तमजातीया अशोकादयोऽनेकप्रकारा वा एते–उपलभ्यमानस्वरूपा वृक्षा दीर्घवृत्ता महालयाः–दीर्घा नालिकेरिप्रभृतयो, वृत्ता नन्दिवृक्षादयो, महालया वटादयः, प्रजातशाखा–उत्पन्नडाला, विटपिनः–प्रशाखावन्तो वदेद्दर्शनीया इति, एते च प्रयोजने उत्पन्ने विश्रमणतदासन्नमार्गकथनादौ वदेन्नान्यदेति ॥ ३०८ ॥ तहा फलाइं पक्काइत्ति, तथा फलानि–आम्रफलादीनि पक्वानि–पाकप्राप्तानि, तथा पाकखाद्यानि–बद्धास्थीनि गर्त्ताप्रक्षेपकोद्रवपलालादिना विपाच्य भक्षणयोग्यानीति नो वदेत्, तथा वेलोचितानि–पाकातिशयतो ग्रहणकालोचितानि, अतः परं कालं न विषहन्तीत्यर्थः, टालानि–अबद्धास्थीनि कोमलानीति यदुक्तं भवति, तथा द्वैधिकानीति–पेशीसम्पादनेन द्वैधीभावकरणयोग्यानि वेति नो वदेत्, दोषाः पुनरत्रात ऊर्ध्वं नाश एवामीषां, न शोभनानि

आसणं सयणं जाणं, हुज्जा वा किंचुवस्सए । भूओवघाइणिं भासं, नेवं भासिज्ज पन्नवं ॥ ३०६ ॥
तहेव गंतुमुज्जाणं, पव्वयाणि वणाणि अ । रुक्खा महल्ल पेहाए, एवं भासिज्ज पन्नवं ॥ ३०७ ॥
जाइमंता इमे रुक्खा, दीहवट्टा महालया । पजायसाला विडिमा, वए दरिसणित्ति अ ॥ ३०८ ॥
तहा फलाइं पक्काइं, पायखज्जाइं नो वए । वेलोइयाइं टालाइं, वेहिमाइ त्ति नो वए ॥ ३०९ ॥
असंथडा इमे अंबा, बहुनिव्वडिमाफला । वइज्ज बहुसंभूआ, भूअरूवत्ति वा पुणो ॥ ३१० ॥
तहेवोसहिओ पक्काओ, नीलिआओ छवीइ अ । लाइमा भज्जिमाउत्ति, पिहुखज्ज त्ति नो वए ॥ ३११ ॥
(वि)रूढा बहुसंभूआ, थिरा ओसढावि अ । गब्भिआओ पसूआओ, संसाराउत्ति आलवे ॥ ३१२ ॥

तहेव गंतुमिति, तथैवेति पूर्ववत्, गत्वा उद्यानं-जनक्रीडास्थानं तथा पर्वतान् प्रतीतान् तथा वनानि च, तत्र वृक्षान्महतो-महाप्रमाणान् प्रेक्ष्य-दृष्ट्वा नैवं भाषेत प्रज्ञावान्-साधुरिति ॥ ३०३ ॥ कथमित्याह-अलमिति, अलं-पर्याप्ता एते वृक्षाः प्रासादस्तम्भयोः, अत्रैकस्तम्भः प्रासादः, स्तम्भस्तु स्तम्भ एव, तयोरलं, तथा तोरणानां-नगरतोरणादीनां गृहाणां च-कुटीरकादीनामलमिति योगः, तथा परिघार्गलानावां वा तत्र नगरद्वारे परिघः, गोपुर-कपाटादिषु अर्गला, नौः प्रतीता, आसां अलं एते वृक्षाः, तथोदकद्रोणीनामलं, उदकद्रोण्योऽरहट्टजलधारिका इति ॥३०४॥

तथा पीढए इति, पीठकायालमेते वृक्षाः, पीठकं प्रतीतं तदर्थं, "सुपां सुपो भवन्ती"ति चतुर्थ्यर्थे प्रथमा, एवं सर्वत्र योजनीयं, तथा चंगबेरा येत्ति चंगवेरा-काष्ठपात्री तथा नङ्गलेत्ति नांगलं-हलं, तथा अलं मयिकाय स्यात्, मयिकं-उप्तबीजाच्छादनं, तथा यन्त्रयष्टये वा, यंत्रयष्टिः प्रसिद्धा, नामये वा, नाभिः-शकटरथाङ्गं गण्डिकायै वाऽलं स्युरेते घृक्षा इति, नैवं भाषेत प्रज्ञावानिति वर्त्तते, गण्डिका सुवर्णकाराणामधिकरणी स्थापनी भवतीति ॥२०५॥ तथा आसणंति, आसनं-आसन्दकादि, शयनं-पर्यङ्कादि, यानं-युग्यादि, भवेद्वा किंचिदुपाश्रये-वसतावन्यद्वा द्वारपात्राद्येतेपु वृक्षेष्विति, भूतोपघातिनीं-सत्त्वपीडाकारिणीं भाषां नैव भाषेत प्रज्ञावान् साधुरिति, दोपाश्चात्र तद्वनस्वामी व्यन्तरादिः कुप्येत्, सलक्षणो वा वृक्ष इत्यभिगृह्णीयात्, अनियमितभाषिणो लाघवं चेत्येवमादयो योज्याः ॥ २०६ ॥ अत्रैव विधिमाह-तहेवत्ति, वस्तुतः पूर्ववदेव, नवरमेवं भाषेत ॥ २०७ ॥ जाइमंतत्ति, जातिमन्तः-उत्तमजातीया अशोकादयोऽनेकप्रकारा वा एते-उपलभ्यमानस्वरूपा वृक्षा दीर्घवृत्ता महालयाः-दीर्घा नालिकेरिप्रभृतयो, वृत्ता नन्दिवृक्षादयो, महालया वटादयः, प्रजातशाखा-उत्पन्नडाला, विटपिनः-प्रशाखावन्तो वदेद्दर्शनीया इति, एते च प्रयोजने उत्पन्ने विश्रमणतदासन्नमार्गकथनादौ वदेन्नान्यदेति ॥ २०८ ॥ तहा फलाइं पक्काइत्ति, तथा फलानि-आम्रफलादीनि पक्कानि-पाकप्राप्तानि, तथा पाकखाद्यानि-बद्धास्थीनि गर्त्ताप्रक्षेपकोद्रवपलालादिना विपाच्य भक्षणयोग्यानीति नो वदेत्, तथा वेलोचितानि-पाकातिशयतो ग्रहणकालोचितानि, अतः परं कालं न विपहन्तीत्यर्थः, टालानि-अबद्धास्थीनि कोमलानीति यदुक्तं भवति, तथा द्वैधिकानीति-पेशीसम्पादनेन द्वैधीभावकरणयोग्यानि वेति नो वदेत्, दोषाः पुनरत्रात ऊर्ध्वं नाश एवामीषां, न शोभनानि

आसणं सयणं जाणं, हुज्जा वा किंचुवस्सए । भूओवघाइणिं भासं, नेवं भासिज्ज पन्नवं ॥ ३०६ ॥
तहेव गंतुमुज्जाणं, पव्वयाणि वणाणि अ । रुक्खा महल्ल पेहाए, एवं भासिज्ज पन्नवं ॥ ३०७ ॥
जाइमंता इमे रुक्खा, दीहवट्टा महालया । पयायसाला विडिमा, वए दरिसणित्ति अ ॥ ३०८ ॥
तहा फलाइं पक्काइं, पायखज्जाइं नो वए । वेलोइयाइं टालाइं, वेहिमाइ त्ति नो वए ॥ ३०९ ॥
असंथडा इमे अंबा, बहुनिव्वडिमाफला । वइज्ज बहुसंभूआ, भूअरूवत्ति वा पुणो ॥ ३१० ॥
तहेवोसहिओ पक्काओ, नीलिआओ छवीइ अ । लाइमा भज्जिमाउत्ति, पिहुखज्ज त्ति नो वए ॥ ३११ ॥
(रि)रूढा बहुसंभूआ, थिरा ओसढावि अ । गब्भिआओ पसूआओ, संसाराउत्ति आलवे ॥ ३१२ ॥

तहेव गंतुमिति, तथैवेति पूर्ववत्, गत्वा उद्यानं-जनक्रीडास्थानं तथा पर्वतान् प्रतीतान् तथा वनानि च, तत्र वृक्षान्महतो-महाप्रमाणान् प्रेक्ष्य-दृष्ट्वा नैवं भाषेत प्रज्ञावान्-साधुरिति ॥ ३०३ ॥ कथमित्याह-अलमिति, अलं-पर्याप्ता एते वृक्षाः प्रासादस्तम्भयोः, अत्रैकस्तम्भः प्रासादः, स्तम्भस्तु स्तम्भ एव, तगोरलं, तथा तोरणानां-नगरतोरणादीनां गृहाणां च-कुटीरकादीनामलमिति योगः, तथा परिघार्गलानावां च तत्र नगरद्वारे परिघः, गोपुर-कपाटादिषु अर्गला, नौः प्रतीता, आसां अलं एते वृक्षाः, तथोदकद्रोणीनामलं, उदकद्रोण्योऽरहट्टजलधारिका इति ॥३०४॥

वाग्विधिप्रतिषेधाधिकारेऽनुवर्त्तमाने इदमपरमाह—तहेवत्ति, तथैव संखडिं ज्ञात्वा संखण्डयन्ते प्राणिनामायूंषि यस्यां प्रकरणक्रियायां सा संखडी तां ज्ञात्वा, करणीयेति पित्रादिनिमित्तं कृत्यैवैषेति नो वदेत्, मिथ्यात्वोपबृंहणदोषात्, तथा स्तेनकं चापि वध्य इति नो वदेत्, तदनुमतत्वेन निश्चयादिदोषप्रसङ्गात्, सुतीर्था इति च, चशब्दाद् दुस्तीर्था इति वा आपगा—नद्यः, केनचित्पृष्टः सन्नो वदेत्, अधिकरणविघातादिदोषप्रसङ्गादिति ॥२१३॥ प्रयोजने पुनरेवं वदेदित्याह— संखडिंति, संखडिं संखडिं ब्रूयात्, साधुकथनादौ संकीर्णा संखडिरित्येवमादि, पणितार्थ इति स्तेनकं वदेत्, शैक्षकादिककर्मविपाकदर्शनादौ, पणितेनार्थोऽस्येति पणितार्थः, पणद्यूतप्रयोजन इत्यर्थः। तथा बहुसमानि तीर्थानि आपगानां—नदीनां व्यागृणीयात्साध्वादिविषय इति ॥ २१४ ॥

तहा नईओ पुण्णाओ, कायतिज्जत्ति नो वए। नावाहिं तारिमाउत्ति, पाणिपिज्जत्ति नो वए ॥ २१५ ॥

बहुवाहडा अगाहा, बहुसलिलुप्पिलोदगा। बहुवित्थडोदगा आवि, एवं भासिज्ज पन्नवं ॥ २१६ ॥

तहेव सावज्जं जोगं, परस्सट्ठा अ निट्ठिअं। कीरमाणंति वा नच्चा, सावज्जं न लवे मुणी ॥ २१७ ॥

वाग्विधिप्रतिषेधाधिकार एव इदमाह—तहा नईउत्ति, तथा नद्यः पूर्णा—भृता इति नो वदेत्, प्रवृत्तश्रवणनिवर्त्तनादिदोषात्, तथा कायतरणीयाः—शरीरतरणयोग्या इत्येवं नो वदेत्, साधुवचनतोऽविघ्नमिति प्रवर्त्तनादिदोषप्रसङ्गात्, तथा नौभिः—द्रोणीभिस्तरणीयाः—तरणयोग्या इत्येवं नो वदेत्, अन्यथा विघ्नशङ्कया तत्प्रवर्त्तनात्, तथा प्राणिपेयाः—तटस्थ-

वा प्रकारान्तरमोगेनेत्यथमार्ग गृहिप्रवृत्यावधिकरणादय इति ॥ ३०९ ॥ प्रयोजने पुनर्मार्गदर्शनादो चैवं वदेदित्याह–असंथडत्ति, असमर्था एते आम्राः, अतिभारेण न प्रभवन्ति फलानि धारयितुमित्यर्थः, आम्रग्रहणं प्रधानवृक्षोपलक्षणं, एतेन पकार्थ उक्तः, तथा बहुनिर्वर्तितफलाः-बहूनि निर्वर्तितानि-बद्धास्थीनि फलानि येषु ते तथा, अनेन पाकखाद्यार्थ उक्तः, वदेद् बहुनि-संभूतानि-पाकातिशयतो ग्रहणकालोचितानि फलानि येषु ते तथाविधाः, अनेन वेलोचितार्थ उक्तः, तथा भूतरूपा इति वा पुनर्वदेद्भूतानि रूपाणि-अबद्धास्थीनि कोमलफलरूपाणि येषु ते तथा, अनेन टालाद्यर्थ उपलक्षित इति ॥ ३१० ॥ तहस्ति, तथैवौषधयः-शाल्यादिलक्षणाः पक्वा इति तथा नीलाश्छवय इति, वल्लचनकादिफललक्षणाः, तथा लवनवत्यो-लवनयोग्याः, भर्जनवत्य इति-भर्जनयोग्याः, पृथुकभक्ष्या इति नो वदेत् पृथुकभक्षणयोग्याः, नो वदेदिति सर्वत्र सम्बध्यते, पृथुका अर्द्धपक्वशाल्यादिषु क्रियन्ते, अभिधानदोषाः पूर्ववदिति ॥ ३११ ॥ प्रयोजने पुनर्मार्गदर्शनादावेवमालपेदित्याह–रूढस्ति, रूढाः-प्रादुर्भूताः, बहुसंभूता-निष्पन्नप्रायाः, स्थिरा-निष्पन्नाः, उत्सृता इति वा-उपघातेभ्यो निर्गता वा, तथा गर्भिता-अनिर्गतशीर्षकाः प्रसूता-निर्गतशीर्षकाः, ससाराः-संजाततण्डुलादिसारा इत्येवमालपेत्, पक्वाद्यर्थयोजना स्वधिया कार्येति ॥ ३१२ ॥

तहेव संखडिं नच्चा, किच्चं कज्जंति नो वए। तेणगं वावि वज्झत्ति, सुतित्थित्ति अ आवगा ॥ ३१३ ॥
संखडिं संखडिं बूआ, पणिअट्ठं त्ति तेणगं । बहुसमाणि तित्थाणि, आवगाणं विआगरे ॥ ३१४ ॥

वर्जयेन्मुनिरनुमत्यादिदोषप्रसङ्गात्, निरवद्यं तु न वर्जयेत्, यथा–सुकृतमिति सुष्ठु कृतं वैयावृत्त्यमनेन, सुपक्कमिति–सुष्ठु पक्वं ब्रह्मचर्यं साधोः, सुच्छिन्नमिति–सुष्ठु छिन्नं स्नेहबन्धनमनेन, सुहृतमिति सुष्ठु हृतं शिक्षकोपकरणमुपसर्गे, सुमृत इति–सुष्ठु मृतः पण्डितमरणेन साधुरिति, अत्रापि सुशब्दोऽनुवर्त्तते, सुनिष्ठितं–सुष्ठु निष्ठितं कर्म्माप्रमत्तसंयतस्य, सुलट्ठत्ति–सुष्ठु सुन्दरा साधुक्रियेत्येवमादिरिति ॥ ३१८ ॥ उक्तानुक्तापवादविधिमाह–पयत्तत्ति, प्रयत्नपक्कमिति वा प्रयत्नपक्कमेतत्, पक्कं सहस्रपाकादि ग्लानादिप्रयोजने एवमालपेत्, तथा प्रयत्नच्छिन्नमिति वा–प्रयत्नच्छिन्नमेतच्छिन्नं–व्रणा(वना)दि साधुनिवेदनादावेवमालपेत्, तथा प्रयत्नलष्टेति चेति प्रयत्नसुन्दरा कन्या दीक्षिता सती सम्यक् पालनीयेति, कर्महेतुकमिति सर्वमेव वा कृतादि कर्म्मनिमित्तमालपेदिति योगः, तथा गाढप्रहारमिति वा कञ्चन गाढमालपेत्–गाढप्रहारं ब्रूयात्, क्वचित्प्रयोजने, एवं हि तदप्रीत्यादयो दोषाः परिहृता भवन्ति इति ॥ ३१९ ॥

सव्वुक्कसं परग्घं वा, अउलं नत्थि एरिसं । अविक्किअमवत्तव्वं, अचिअत्तं चेव नो वए ॥ ३२० ॥

सव्वमेअं वइस्सामि, सव्वमेअं ति नो वए । अणुवीइ सव्वं सव्वत्थ, एवं भासिज्ज पन्नवं ॥ ३२१ ॥

सुक्कीअं वा सुविक्कीअं, अकिज्जं किज्जमेव वा । इमं गिण्ह इमं मुंच, पणीयं नो विआगरे ॥ ३२२ ॥

अप्पग्घे वा महग्घे वा, कए वा विक्कएवि वा । पणिअट्ठे समुप्पन्ने, अणवज्जं विआगरे ॥ ३२३ ॥

क्वचिद् व्यवहारे प्रक्रान्ते पृष्टो वा अपृष्टो वा नैवं वदेदित्याह–सव्वुक्कसंति, एतन्मध्ये इदं सर्वोत्कृष्टं–स्वभावेन

प्राणिपेया नो वदेदिति, तथैव प्रवृत्तनिवर्त्तनादिदोषादिति ॥ ३१५ ॥ प्रयोजने तु साधुमार्गकथनादावेवं भाषेतेत्याह–बहुवाहडेति, बहुधा भृताः प्रायशो भृता इत्यर्थः, तथा अगाहा इति बहुगाधाः प्रायोगम्भीराः, तथा बहुसलिलोत्पीलोदकाः–प्रतिश्रोतोवाहितापरसरित इत्यर्थः, तथा बहुविस्तीर्णोदकाश्च–स्वतीरप्लावनप्रवृत्तजलाश्च, एवं भाषेत प्रज्ञावान् साधुः, न तु तदाऽऽगतपृष्टो न वेद्म्यहमिति ब्रूयात्, प्रत्यक्षमृषावादित्वेन तत्प्रद्वेषादिदोषप्रसङ्गादिति ॥ ३१६ ॥ वाग्विधिप्रतिषेधाधिकार एवेदमाह–तहेवत्ति, तथैव सावद्यं–सपापं, योगं–व्यापारं अधिकरणं समादिविषयं परस्यार्थाय–परनिमित्तं निष्ठितं–निष्पन्नं तथा क्रियमाणं वा वर्त्तमानं वाशब्दात् भविष्यत्काले भाविनं वा ज्ञात्वा सावद्यं नालपेत् सपापं न ब्रूयान्मुनिः–साधुरिति ॥ ३१७ ॥

सुकडेत्ति सुपक्कित्ति, सुच्छिन्ने सुहडे मडे। सुनिट्ठिए सुलट्ठित्ति, सावज्जं वज्जए मुणी ॥ ३१८ ॥

पयत्तपक्कत्ति व पक्कमालवे, पयत्तच्छिन्नत्ति व छिन्नमालवे।

पयत्तलट्ठित्ति व कम्महेउअं, पहारगाढत्ति व गाढमालवे ॥ ३१९ ॥

तत्र निष्ठितं नैवं ब्रूयात् इत्याह–सुकडित्ति, सुष्ठु कृतं सुकृतं सभादि, सुपक्वमिति, सुष्ठु पक्वं सहस्रपाकादि, सुच्छिन्नमिति–सुष्ठु छिन्नं तद्वनादि, सुहृतमिति–सुष्ठु हृतं क्षुद्रस्य वित्तमिति, सुमृत इति–सुष्ठु मृतः प्रत्यनीक इति, अत्रापि सुशब्दोऽनुवर्त्तते, सुनिष्ठितमिति सुष्ठु निष्ठितं वित्ताभिमानिनो वित्तं, सुलट्ठित्ति–सुष्ठु सुन्दरा कन्या इति, सावद्यमालपनं

बहवे इमे असाहू, लोए वुच्चंति साहुणो । न लवे असाहु साहुत्ति, साहुं साहुत्ति आलवे ॥ ३२५ ॥
नाणदंसणसंपन्नं, संजमे अ तवे रयं । एवं गुणसमाउत्तं, संजयं साहुमालवे ॥ ३२६ ॥ तथा शेषव

किंच-तहेवत्ति, तथैवासंयतं-गृहस्थं धीरो-यतिः, आस्वेहैव, एहीतोऽत्र, कुरु वेदं-संचयादीति, तथा शेषव निद्रया, तिष्ठोर्ध्वस्थानेन व्रज ग्राममिति नैवं भाषेत प्रज्ञावान्-साधुरिति ॥ ३२४ ॥ बहवेत्ति, बहव एते-उपलभ्य- मानस्वरूपा आजीविकादयः असाधवो निर्वाणसाधकयोगापेक्षया लोके तु प्राणिलोके प्राणिसंघात उच्यन्ते साधवः सामान्येन, तत्र नालपेत् असाधुं माधुं मृषावादप्रसङ्गात्, अपि तु साधुं साधुमित्यालपेत्, न तु तमपि नालपेत्, उपबृंहणाति- चारदोषप्रसङ्गादिति ॥ ३२५ ॥ किंविशिष्टं साधुं साधुमित्यालपेदित्याह-नाणत्ति, ज्ञानदर्शनसंपन्नं-समृद्धं, संयमे तपसि च रतं यथाशक्त्या एवं गुणसमायुक्तं संयतं साधुमालपेत्, न तु द्रव्यलिङ्गधारिणमपीति ॥ ३२६ ॥

देवाणं मणुआणं च, तिरिआणं च वुग्गहे । अमुगाणं जओ होउ, मा वा होउ त्ति नो वए ॥ ३२७ ॥
वाओ वुट्ठं च सीउण्हं, खेमं धायं सिवंति वा । कया णु हुज्ज एयाणि ?, मा वा होउ त्ति नो वए ॥ ३२८ ॥

तहेव मेहं व नहं व माणवं, न देवदेवत्ति गिरं वइज्जा ।
समुच्छिए उन्नए वा पओए, वइज्ज वा वुट्ठ बलाहयत्ति ॥ ३२९ ॥

सुन्दरमित्यर्थः, परार्घं चोत्तमार्घं वा महार्घं क्रीतमिति भावः, अतुलं-नास्तीदृशमन्यत्रापि क्वचित्, अविक्किंयंति-असंस्कृतं सुलभमीदृशमन्यत्रापि, अवक्तव्यमित्यनन्तगुणमेतदेव अचियत्तं वा-अप्रीतिकरं चैतदिति नो वदेद्, अधिकरणान्तरायादिदोषप्रसङ्गादिति ॥ ३२० ॥ किंच-सव्वमेयमिति, सर्वमेतद्वक्ष्यामीति केनचित्कस्यचित्संदिष्टे सर्वमेतत् त्वया वक्तव्यमिति, सर्वमेतद्वक्ष्यामीति नो वदेत्, सर्वस्य तथास्वरव्यञ्जनाद्युपेतस्य वक्तुमशक्यत्वात्, तथा सर्वमेतदिति नो वदेत्, कस्यचित्संदेशं प्रयच्छन्, सर्वमेतदित्येवं वक्तव्यमिति नो वदेत्, सर्वस्य तथास्वरव्यञ्जनाद्युपेतस्य वक्तुमशक्यत्वात्, असंभवाभिधाने मृषावादः, यतश्चैवमतोऽनुचिन्त्यालोच्य सर्वं वाच्यं सर्वेषु कार्येषु यथाऽसंभवाद्यभिधानादिना मृषावादो न भवत्येवं भाषेत प्रज्ञावान् साधुरिति ॥ ३२१ ॥ किंच-सुक्कीयं वत्ति, सुक्रीतं चेति केनचित् किञ्चित् क्रीतं दर्शितं सत् सुक्रीतमिति न व्यागृणीयादिति योगः, तथा सुविक्कीतमिति किञ्चित्केनचिद्विक्रीतं दृष्ट्वा पृष्टः सन् सुविक्रीतमिति न व्यागृणीयात्, तथा केनचित्क्रीते पृष्टः, अकेयं-क्रयार्हमेव न भवतीति न व्यागृणीयात्, तथैवमेव केयमेव वा-क्रयार्हमिति, तथेदं-गुडादि गृह्णीयादा( गृहाणा )गामिनि काले महार्घं भविष्यतीति, तथेदं मुञ्च घृताद्यागामिनि काले समर्घं भविष्यतीतिकृत्वा पणितं-पण्यं नैव व्यागृणीयात्, अप्रीत्यधिकरणादिदोषप्रसङ्गादिति ॥ ३२२ ॥ अत्रैव विधिमाह-अप्पग्घे वत्ति, अल्पार्घे वा महार्घे वा, कस्मिन्नित्याह-क्रये वा विक्रयेऽपि वा पणितार्थे-पण्यवस्तुनि समुत्पन्ने केनचित्पृष्टः सन्ननवद्यं-अपापं व्यागृणीयात् यथा नाधिकारोऽत्र तपस्विनां, व्यापाराभावादिति ॥ ३२३ ॥

तहेवासंजयं धीरो, आस एहि करेहि वा । सय चिट्ठ वयाहित्ति, नेवं भासिज्ज पन्नवं ॥ ३२४ ॥

तहेवत्ति, तथैव सावद्यानुमोदिनी गीः-वाक् यथा सुष्ठु हतो ग्राम इति, तथाऽवधारिणी-इदमित्थमेवेति, संशयकारिणी वा, या च परोपघातिनी यथा-मांसमदोपाय, से इति तामेवंभूतां, क्रोधाल्लोभाद्भयाद्धासाद्वा, मानप्रेमादीनामुपलक्षणमेतन्मानवः-पुमान् साधुर्न हसन्नपि गिरं वदेत्, प्रभूतकर्मबन्धहेतुत्वादिति ॥ ३३१ ॥

सवक्कसुद्धिं समुपेहिआ मुणी, गिरं च दुट्ठं परिवज्जए सया ।
मिअं अदुट्ठं अणुवीइ भासए, सयाण मज्झे लहई पसंसणं ॥ ३३२ ॥
भासाइ दोसे अ गुणे अ जाणीआ, तीसे अदुट्ठे परिवज्जए सया ।
छसु संजए सामणिए सया जए, वइज्ज बुद्धे हिअमाणुलोमिअं ॥ ३३३ ॥
परिक्खभासी सुसमाहिइंदिए, चउक्कसायावगए अणिस्सिए ।
से निद्धुणे धुन्नमलं पुरेकडं, आराहए लोगमिणं तहा परं ॥ ३३४ ॥ त्तिबेमि ॥

इति सवक्कसुद्धीअज्झयणं समत्तं ७ ॥

वाक्यशुद्धिफलमाह-सवक्कत्ति, मद्वाक्यशुद्धिं स्ववाक्यशुद्धिं वा सवाक्यशुद्धिं वा, सतीं शोभनां, स्वां आत्मीयां, स इति वक्ता, वाक्यशुद्धिं संप्रेक्ष्य-सम्यग्दृष्ट्वा मुनिः-साधुः, गिरं तु दुष्टां-यथोक्तलक्षणां परिवर्जयेत्सदा, किंतु मितं

अंतलिक्खत्ति णं बूआ, गुज्झाणुचरिअत्ति अ । रिद्धिमंतं नरं दिस्स, रिद्धिमंतंति आलवे ॥ ३३० ॥

तहेव सावज्जणुमोअणी गिरा, ओहारिणी जा य परोवघाइणी ।
से कोह लोह भय हास माणवो, न हासमाणोऽवि गिरं वइज्जा ॥ ३३१ ॥

किंच-देवाणंति, देवानां-देवासुराणां, मनुजानां च-नरेन्द्रादीनां, तिरश्चां च-महिषादीनां विग्रहे-सङ्ग्रामे सत्यमुक्तानां देवादीनां जयो भवतु मा वा भवतु इति च नो वदेत्, अधिकरणतत्स्वाम्यादिद्वेषदोषप्रसंगादिति ॥ ३२७ ॥ किं च-वाओत्ति, वातो-मलयमारुतादिः, वृष्टं वा प्रवर्षणं, शीतोष्णं प्रतीतं, क्षेमं-राजविड्वरशून्यं, ध्रातं-सुभिक्षं, शिवमिति चोपसर्गरहितं कदा नु भवेयुरेतानि वातादीनि मा भवेयुरिति, धर्माद्यभिभूतो नो वदेद्, अधिकरणादि-दोषप्रसङ्गात्, वातादिषु सत्सु सत्त्वपीडापत्तेस्तद्वचनतस्तथाऽभवनेऽप्यार्तध्यानभावादिति ॥ ३२८ ॥ तहेवत्ति, तथैव मेघं वा नभो मानवं चाश्रित्य नो देवदेवत्ति गिरं वदेत्, मेघमुन्नतं दृष्ट्वा 'उन्नतो देव' इति नो वदेत्, एवं नभः-आकाशं मानवं-राजानं देवमिति नो वदेत् मिथ्यावादलाघवादिप्रसङ्गात्, कथं तर्हि वदेत् ? इत्याह मेघमुन्नतं दृष्ट्वा सम्मूर्छित उन्नतो वा पयोद इति, वदेद्वा वृष्टो बलाहक इति ॥ ३२९ ॥ नभ आश्रित्याह—अंतलिक्खत्ति, इह नभोऽन्तरिक्षमिति ब्रूयात्, गुह्यानुचरितमिति वा सुरसेवितमित्यर्थः, एवं किल मेघोऽप्येतदुभयशब्दवाच्य एव, तथा ऋद्धिमन्तं-संपदुपेतं नरं दृष्ट्वा, किमित्याह-ऋद्धिमन्तमिति ऋद्धिमानयमित्येवमालपेत् व्यवहारतो मृषावादादिपरिहारार्थम् ॥ ३३० ॥ किंच-

तहेवत्ति, तथैव सावद्यानुमोदिनी गीः–वाक् यथा सुष्ठु हतो ग्राम इति, तथाऽवधारिणी–इदमित्थमेवेति, संशयकारिणी वा, या च परोपघातिनी यथा–मांसमदोषाय, से इति तामेवंभूतां, क्रोधाल्लोभाद्भयाद्धासाद्वा, मानप्रेमादीनामुपलक्षण-मेतन्मानवः–पुमान् साधुर्न हसन्नपि गिरं वदेत्, प्रभूतकर्मबन्धहेतुत्वादिति ॥ ३३१ ॥

सवक्कसुद्धिं समुपेहिआ मुणी, गिरं च दुट्ठं परिवज्जए सया ।
मिअं अदुट्ठं अणुवीइ भासए, सयाण मज्झे लहई पसंसणं ॥ ३३२ ॥
भासाइ दोसे अ गुणे अ जाणीआ, तीसे अदुट्ठे परिवज्जए सया ।
छसु संजए सामणिए सया जए, वइज्ज बुद्धे हिअमाणुलोमिअं ॥ ३३३ ॥
परिक्खभासी सुसमाहिइंदिए, चउक्कसायावगए अणिस्सिए ।
से निद्धुणे धुन्नमलं पुरेकडं, आराहए लोगमिणं तहा परं ॥ ३३४ ॥ त्तिबेमि ॥

इति सवक्कसुद्धीअज्झयणं समत्तं ७ ॥

वाक्यशुद्धिफलमाह–सवक्कत्ति, सद्वाक्यशुद्धिं स्ववाक्यशुद्धिं वा सवाक्यशुद्धिं वा, सतीं शोभनीं, स्वां आत्मीयां, स इति वक्ता, वाक्यशुद्धिं संप्रेक्ष्य–सम्यग्दृष्ट्वा मुनिः–साधुः, गिरं तु दुष्टां–यथोक्तलक्षणां परिवर्जयेत्सदा, किंतु मितं

अंतलिक्खत्ति ण वूआ, गुज्झाणुचरिअत्ति अ। रिद्धिमंतं नरं दिस्स, रिद्धिमंतंति आलवे ॥ ३३० ॥

तहेव सावज्जणुमोअणी गिरा, ओहारिणी जा य परोवघाइणी।
से कोह लोह भय हास माणवो, न हासमाणोऽवि गिरं वइज्जा ॥ ३३१ ॥

किंच-देवाणत्ति, देवानां-देवासुराणां, मनुजानां च-नरेन्द्रादीनां, तिरश्चां च-महिषादीनां विग्रहे-सङ्ग्रामे मत्यमुकानां देवादीनां जयो भवतु मा वा भवतु इति च नो वदेत्, अधिकरणतत्स्वाम्यादिद्वेषदोषप्रसङ्गादिति ॥ ३२७ ॥ किं च-वाओत्ति, वातो-मलयमारुतादिः, वृष्टं वा वर्षणं, शीतोष्णं प्रतीतं, क्षेमं-राजविड्वरशून्यं, ध्मातं-सुभिक्षं, शिवमिति चोपसर्गरहितं कदा नु भवेयुरेतानि वातादीनि मा भवयुरिति, घर्माद्यभिभूतो नो वदेद्, अधिकरणादिदोषप्रसङ्गात्, वातादिषु सत्सु सत्त्वपीडापत्तेस्तद्वचनतस्तथाऽभवनेऽप्यार्त्तध्यानभावादिति ॥ ३२८ ॥ तहेवत्ति, तथैव मेघं वा नभो मानवं वाश्रित्य नो देवदेवत्ति गिरं वदेत्, मेघमुन्नतं दृष्ट्वा 'उन्नतो देव' इति नो वदेत्, एवं नभः-आकाशं मानवं-राजानं देवमिति नो वदेत् मिथ्यावादलाघवादिप्रसङ्गात्, कथं तर्हि वदेत् ? इत्याह मेघमुन्नतं दृष्ट्वा सम्मूर्छित उन्नतो वा पयोद इति, वदेद्वा वृष्टो बलाहक इति ॥ ३२९ ॥ नभ आश्रित्याह—अंतलिक्खत्ति, इह नभोऽन्तरिक्षमिति ब्रूयात्, गुह्यानुचरितमिति वा सुरसेवितमित्यर्थं, एवं किल मेघोऽप्येतदुभयशब्दवाच्य एव, तथा ऋद्धिमन्तं-सम्पदुपेतं नरं दृष्ट्वा, किमित्याह-ऋद्धिमन्तमिति ऋद्धिमानयमित्येवमालपेत् व्यवहारतो मृषावादादिपरिहारार्थम् ॥ ३३० ॥ किंच-

तहेवत्ति, तथैव सावद्यानुमोदिनी गीः–वाक् यथा सुष्ठु हतो ग्राम इति, तथाऽवधारिणी–इदमित्थमेवेति, संशयकारिणी वा, या च परोपघातिनी यथा–मांसमदोषाय, से इति तामेवंभूतां, क्रोधाल्लोभाद्भयाद्धासाद्वा, मानप्रेमादीनामुपलक्षण-मेतन्मानवः–पुमान् साधुर्न हसन्नपि गिरं वदेत्, प्रभूतकर्मबन्धहेतुत्वादिति ॥ ३३१ ॥

सवक्कसुद्धिं समुपेहिआ मुणी, गिरं च दुट्ठं परिवज्जए सया ।
मिअं अदुट्ठं अणुवीइ भासए, सयाण मज्जे लहई पसंसणं ॥ ३३२ ॥
भासाइ दोसे अ गुणे अ जाणीआ, तीसे अदुट्ठे परिवज्जए सया ।
छसु संजए सामणिए सया जए, वइज्ज बुद्धे हिअमाणुलोमिअं ॥ ३३३ ॥
परिक्खभासी सुसमाहिइंदिए, चउक्कसायावगए अणिस्सिए ।
से निद्धुणे धुन्नमलं पुरेकडं, आराहए लोगमिणं तहा परं ॥ ३३४ ॥ त्तिबेमि ॥

इति सवक्कसुद्धीअज्झयणं समत्तं ७ ॥

वाक्यशुद्धिफलमाह–सवक्कत्ति, सद्वाक्यशुद्धिं स्ववाक्यशुद्धिं वा सवाक्यशुद्धिं वा, मतीं शोभनां, स्वां आत्मीयां, स इति वक्ता, वाक्यशुद्धिं संप्रेक्ष्य–सम्यग्दृष्ट्वा मुनिः–साधुः, गिरं तु दुष्टां–यथोक्तलक्षणां परिवर्जयेत्सदा, किंतु मितं

स्वरतः परिमाणतश्च, अदुष्टं-देशकालोपपन्नादि अनुविचिन्त्य-पर्यालोच्य भाषमाणः सन् सतां-साधूनां मध्ये लभते प्रशंसनं-प्राप्नोति प्रशंसामिति ॥ ३३२ ॥ यतश्चैवमतः-भासाएत्ति, भाषाया उक्तलक्षणाया दोषांश्च गुणांश्च ज्ञात्वा-यथावदवेत्य तस्याश्च दुष्टाया भाषायाः परिवर्जको-विवर्जकः सदा, एवम्भूतः सन् षड्जीवनिकायेषु संयतस्तथा श्रामण्ये-श्रमणभावे चरणपरिणामगर्भे चेष्टिते सदा यतः-सर्वकालमुद्युक्तः सन् वदेत् बुद्धो हितानुलोमं-हितं परिणामसुन्दरं अनुलोमं-मनोहारीति ॥ ३३३ ॥ उपसंहरन्नाह-परिक्खवत्ति, परीक्ष्यभाषी-आलोचितवक्ता तथा सुसमाहितेन्द्रियः-सुप्रणिहितेन्द्रिय इत्यर्थः, अपगतचतुष्कषायः-क्रोधादिनिरोधकर्त्तेति भावः,अनिश्रितो-द्रव्यभावनिश्रारहितः, प्रतिबन्धविमुक्त इति हृदयं, स इत्थंभूतो निर्धूय-प्रस्फोट्य धूम्रमलं-पापमलं, पुराकृतं-जन्मान्तरकृतं, किमित्याह आराधयति-प्रगुणीकरोति लोकमेनं-मनुष्यलोकं वाक्संयतत्वेन, तथा परमिति-परलोकमाराधयति निर्वाणलोकं, यथासम्भवमनन्तरं पारम्पर्येण चेत्यर्थः ॥ ३३४ ॥ ब्रवीमीति पूर्ववदेवेति ॥

इति श्रीसुमतिसाधुविरचितायां दशवैकालिकटीकायां
सप्तमस्य वाक्यशुद्ध्यध्ययनस्य व्याख्यानं समाप्तम् ७ ॥

व्याख्यातं वाक्यशुद्ध्यध्ययनं, इदानीमाचारप्रणिध्याख्यमारभ्यते, अस्य चायमभिसम्बन्धः । इहानन्तराध्ययने साधुना वचनदोषगुणाभिज्ञेन निरवद्यवचसा वक्तव्यमित्येतदभिहितं, इह तु तन्निरवद्यं वच आचारे प्रणिहितस्य भवतीति तत्र यत्नवता भवितव्यमित्येतदुच्यते उक्तं च-" पणिहाणरहियस्सेह निरवज्जंपि भासियं । सावज्जतुल्लं विन्नेयं, अज्झत्थेणेह संवुडं ॥ १ ॥" इत्यनेनाभिसम्बन्धेनायातमिदमध्ययनमिति, तद्यथा—

आयारप्पणिहिं लद्धुं, जहा कायव्व भिक्खुणा । तं भे उदाहरिस्सामि, आणुपुव्विं सुणेह मे ॥ ३३५ ॥

आचारमित्यादि, आचारप्रणिधिमुक्तस्वरूपं लब्ध्वा-प्राप्य यथा-येन प्रकारेण कर्त्तव्यं विहितानुष्ठानं भिक्षुणा-साधुना, तं प्रकारं भे-भवद्भ्य उदाहरिष्यामि-कथयिष्याम्यानुपूर्व्या-परिपाट्या श्रृणुत ममेति गौतमादयः स्वशिष्यानाहुरिति ॥ ३३५ ॥ तं प्रकारमाह—

पुढवीदगअगणिमारुअ, तणरुक्खस्सबीयगा । तसा अ पाणा जीवत्ति इइ वुत्तं महेसिणा ॥ ३३६ ॥

तेसिं अच्छणजोएण, निच्चं होअव्वयं सिआ । मणसा कायवक्केणं, एवं हवइ संजए ॥ ३३७ ॥

पुढविं भित्तिं सिलं लेलुं, नेव भिंदे न संलिहे । तिविहेण करणजोएणं, संजए सुसमाहिए ॥३३८॥

सुद्धपुढवीं न निसीए, ससरक्खंमि अ आसणे । पमज्जित्तु निसीइज्जा, जाइत्ता जस्स उग्गहं ॥३३९॥

सीओदगं न सेविज्जा, सिलावुट्ठं हिमाणि अ। उसिणोदगं तत्तफासुअं, पडिगाहिज्ज संजए ॥३४०॥
उदउल्लं अप्पणो कायं, नेव पुंछे न संलिहे। समुप्पेह तहाभूअं, नो णं संघट्टए मुणी ॥ ३४१ ॥
इंगालं अगणिं अच्चिं, अलायं वा सजोइअं। न उंजिज्जा न घट्टिज्जा, नो णं निव्वावए मुणी ॥३४२॥
तालिअंटेण पत्तेण, साहाए विहुणेण वा। न वीइज्जऽप्पणो कायं, बाहिरं वावि पुग्गलं ॥ ३४३ ॥
तणरुक्खं न छिंदिज्जा, फलं मूलं च कस्सई। आमगं विविहं बीअं, मणसावि ण पत्थए ॥ ३४४ ॥
गहणेसु न चिट्ठिज्जा, बीएसु हरिएसु वा। उदगंमि तहा निच्चं, उत्तिंगपणगेसु वा ॥ ३४५ ॥
तसे पाणे न हिंसिज्जा, वाया अदुव कम्मुणा। उवरओ सव्वभूएसु, पासेज्ज विविहं जगं ॥ ३४६ ॥

पुढविचित्ति, पृथिव्युदकाग्निवायवस्तृणवृक्षसबीजा एते पञ्चैकेन्द्रियकायाः पूर्ववत्, त्रसाश्च प्राणिनो द्वीन्द्रियादयो जीवा इत्युक्तं महर्षिणा-वर्द्धमानेन गौतमेन वेति ॥ ३३६ ॥ यतश्चैवमतः-तेसिंत्ति, तेषां-पृथिव्यादीनां अक्षणयोगेन-अहिंसाव्यापारेण नित्यं भवितव्यं-वर्तितव्यं स्याद्भिक्षुणा मनसा कायेन वाक्येनैभिः करणैरित्यर्थः, एवं वर्त्तमानोऽहिंसकः सन् भवति संयतो, नान्य(था) इति ॥ ३३७ ॥ एवं सामान्येन षड्जीवनिकायाहिंसायां संयतत्वमभिधायाधुना तद्गतविधीन्विधानतो विशेषेणाह-पुढविंचित्ति, पृथिवीं शुद्धां भित्तिं-तटीं शिलां पाषाणात्मिकां

लेष्टुं-इष्टालखण्डं नैव भिन्द्यात् न संलिखेत्, तत्र भेदनं-द्वैधीभावोत्पादनं संलेखनं-ईषल्लेखनं त्रिविधेन करण-योगेन न करोति मनसेत्यादिना संयतः-साधुः, सुसमाहितः शुद्धभाव इति ॥ ३३८ ॥ तथा सुद्धत्ति, शुद्धपृथिव्यां अशस्त्रोपहतायामनन्तरितायां न निषीदेत्, तथा सरजस्के-पृथिवीरजोगुण्डिते वा आसने-पीठकादौ न निषीदेत्, निषीदनग्रहणात् स्थानत्वग्वर्त्तनपरिग्रहः; अचेतनायां तु प्रमृज्य तां रजोहरणेन निषीदेत्, ज्ञात्वेत्यचेतनां ज्ञात्वा याचयित्वा-ऽवग्रहमिति, यस्य सम्बन्धिनी पृथिवी तमवग्रहमनुज्ञाप्येत्यर्थः ॥ ३३९ ॥ उक्तः पृथिवीकायविधिः, अधुना अप्कायविधिमाह-सीओदगत्ति, शीतोदकं-पृथिव्युद्भवं सचित्तोदकं न सेवेत, तथा शिलावृष्टं हिमानि च न सेवेत, अत्र शिलाग्रहणेन करकाः परिगृह्यंते, वृष्टं वर्षणं, हिमं प्रतीतं प्राय उत्तरापथे भवति, यद्येवं कथमयं वर्त्ततेत्याह-उष्णोदकं-क्वथितोदकं तप्त-प्रासुकं-तप्तं सत् प्रासुकं त्रिदण्डोद्वृत्तं, नोष्णोदकमात्रं परिगृह्णीयात्, वृत्त्यर्थं संयतः-साधुः, एतच्च सौवीराद्युपलक्षणमिति ॥३४०॥ तथा उदउल्लंति, नदीमुत्तीर्णः भिक्षाप्रविष्टो वा वृष्टिहतः उदकार्द्रं-उदकबिन्दुचितमात्मनः कायं-शरीरं सस्निग्धं वा नैव पुञ्छयेद्वस्त्रतृणादिभिः न संलिखेत् पाणिना-हस्तेन, अपि तु संप्रेक्ष्य-निरीक्ष्य तथाभूतमुदकार्द्रादिरूपं नैव कायं संघट्टयेन्मुनिर्मनागपि न संस्पृशेदिति ॥ ३४१ ॥ उक्तोऽप्कायविधिः, तेजःकायविधिमाह-इंगालिंति, अङ्गारं-ज्वालारहितं, अग्निमयःपिण्डानुगं, अर्चिः-छिन्नज्वाला, अलातं-उल्मुकं वा सज्योतिः-साग्निकमित्यर्थः, किमित्याह-नो-त्सिञ्चयेन्न घट्टयेत्, तत्रोञ्जनमुत्सेचनं प्रदीपादेः, घट्टनं-मिथश्चालनं, तथा नैनमग्निं निर्वापयेत्-अभावमापादयेन्मुनिः-साधुरिति ॥ ३४२ ॥ प्रतिपादितस्तेजःकायविधिः, वायुकायविधिमाह-तालियंटेणंति, तालवृन्तेन-व्यजनविशेषेण,

पत्रेण-पद्मिनीपत्रादिना, शाखया-वृक्षडालरूपया विधूवनेन वा-व्यजनेन वा, किमित्याह-न वीजयेदात्मनः कायं-स्वशरीरमित्यर्थः, बाह्यं वापि पुद्गलं-उष्णोदकादीति ॥ ३४३ ॥ प्रतिपादितो वायुकायविधिः, वनस्पतिविधिमाह-तणत्ति, तृणवृक्षमित्येकवद्भावः, तृणानि-दर्भादीनि वृक्षाः-कदम्बकादयः, एतांश्च छिन्द्यात्, फलं मूलकं वा कस्यचिद्वृक्षादेर्न छिन्द्यात् तथा आमं-अशस्त्रोपहतं विविधं-अनेकप्रकारं बीजं मनसापि न प्रार्थयेत्, किं पुनरश्नीयादिति ॥ ३४४ ॥ तथा गहणेसु, गहनेषु-वननिकुञ्जेषु च न तिष्ठेत्, सङ्घट्टनादिदोषप्रसङ्गात्, तथा बीजेषु-प्रसारितशाल्यादिषु, हरितेषु वा-दूर्वादिषु न तिष्ठेत्, उदके तथा नित्यं अत्रोदकं-अनन्तवनस्पतिविशेषः, यथोक्तं-"उदए अवए पणए" इत्यादि, उदकमेवान्ये, तत्र नियमतो वनस्पतिभावात्, उत्तिङ्गपनकयोर्वा न तिष्ठेत्, तत्रोत्तिङ्गः-सर्पच्छत्रादिः पनकः-उल्लिवनस्पतिरिति ॥ ३४५ ॥ उक्तो वनस्पतिविधिः, त्रसविधिमाह-तसत्ति, त्रसप्राणिनो-द्वीन्द्रियादीन् न हिंस्यात्, कथमित्याह-वाचा अथवा कर्मणा-कायेन, मनसस्तदन्तर्गतत्वादग्रहणं, अपि चोपरतः सर्वभूतेषु निक्षिप्तदण्डः सन् पश्येद्विविधं जगत्-कर्मपरतन्त्रं नरकादिगतिरूपं निर्वेदायेति ॥ ३४६ ॥

अट्ठ सुहुमाइं पेहाए, जाइं जाणित्तु संजए। दयाहिगारी भूएसु, आस चिट्ठ सएहि वा ॥ ३४७ ॥

कयराइं(णि) अट्ठ सुहुमाइं? जाइं पुच्छिज्ज संजए। इमाइं ताइं मेहावी, आइक्खिज्ज वियक्खणो ॥ ३४८ ॥

सिणेहं पुप्फसुहुमं च, पाणुत्तिंगं तहेव य। पणगं बीअहरिअं च, अंडसुहुमं च अट्ठमं ॥ ३४९ ॥

एवमेआणि जाणिज्जा(त्ता),सव्वभावेण संजए । अप्पमत्तो जए निच्चं, सव्विंदिअसमाहिए ॥ ३५० ॥
उक्तः स्थूलविधिः, अथ सूक्ष्मविधिमाह–अट्ठत्ति, अष्टौ सूक्ष्माणि वक्ष्यमाणानि प्रेक्ष्योपयोगतः आसीत तिष्ठेत्
शयीत वेति योगः, किंविशिष्टानीत्याह–यानि ज्ञात्वा संयतो ज्ञपरिज्ञया प्रत्याख्यानपरिज्ञया च दयाधिकारी भूतेषु
भवति, अन्यथा दयाधिकार्येव नेति, तानि प्रेक्ष्य तद्रहित एवासनादीनि कुर्यात्, अन्यथा तेषां विराधनेन सातिचारतेति
॥ ३४७ ॥ आह–कयराणित्ति, कतराणि तान्यष्टौ सूक्ष्माणि यानि दयाधिकारित्वाभावभयात् पृच्छेत्संयतः, १
अनेन दयाधिकारिण एवैवंविधेषु यत्नमाह, स ह्यवश्यं तदुपकारकाण्यपकारकाणि च पृच्छति, तत्रैव भावप्रतिबन्धादिति,
अमूनि तान्यनन्तरं वक्ष्यमाणानि मेधावी आचक्षीत विचक्षण इति, अनेनाप्येतदेवाह–मर्यादावर्त्तिना तज्ज्ञेन तत्प्ररू-
पणा कार्या, एवं हि श्रोतुस्तत्रोपादेयबुद्धिर्भवति, अन्यथा विपर्यय इति ॥ ३४८ ॥ सिणेहंति, स्नेहमिति स्नेहसूक्ष्मं–
अवश्यायहिममहिकाकरकहरतनुरूपं, पुष्पसूक्ष्मं चेति वटोदुम्बराणां पुष्पाणि, तानि तद्वर्णानि सूक्ष्माणीति न लक्ष्यन्ते,
प्राणीति, प्राणिसूक्ष्ममनुद्धरिः कुन्थुः, स हि चलन् विभाव्यते, न स्थितः, सूक्ष्मत्वात्, उत्तिंगं तथैव चेति, उत्तिंगसूक्ष्मं–
कीटिकानगरं, तत्र कीटिका अन्ये च सूक्ष्मसत्त्वा भवन्ति, तथा पनकमिति, पनकसूक्ष्मं प्रायः प्रावृट्काले भूमिकाष्ठादिषु
पञ्चवर्णस्तद्द्रव्यलीनः पनक इति, तथा बीजसूक्ष्मं–शाल्यादिबीजस्य मुखमूले कणिका, या लोके तुषमुखमित्युच्यते, हरितं
चेति हरितसूक्ष्मं, तच्चाऽत्यन्ताभिनवोद्भिन्नं पृथिवीसमानवर्णमेवेति, अण्डसूक्ष्मं चाष्टममिति एतच्च मक्षिकाकीटिका-
गृहकोकिलाब्राह्मणीकृकलासाद्यण्डकमिति ॥ ३४९ ॥ एवमेआणित्ति, एवमुक्तेन प्रकारेण एतानि सूक्ष्माणि ज्ञात्वा

सन्नादेशेन सर्वभावेन-शक्त्यनुरूपेण स्वरूपसंरक्षणादिना संयतः-साधुः, किमित्याह-अप्रमत्तो-निद्रादिप्रमादरहितो पतेत मनोवाक्कायैः संरक्षणं प्रति, नित्यं-सर्वकालं सर्वेन्द्रियसमाहितः-शब्दादिषु रागद्वेषौ अगच्छन्निति ॥ ३५० ॥

धुवं च पडिलेहिज्जा, जोगसा पायकंबलं । सिज्जमुच्चारभूमिं च, संथारं अदुवाऽऽसणं ॥ ३५१ ॥

उच्चारं पासवणं, खेलं सिंघाणजल्लिअं । फासुअं पडिलेहित्ता, परिट्ठाविज्ज संजए ॥ ३५२ ॥

पविसित्तु परागारं, पाणट्ठा भोअणस्स वा । जयं चिट्ठे मिअं भासे, न य रूवेसु मणं करे ॥ ३५३ ॥

बहुं सुणेइ कन्नेहिं, बहुं अच्छीहिं पिच्छइ । न य दिट्ठं सुअं सव्वं, भिक्खू अक्खाउमरिहइ ॥ ३५४ ॥

सुअं वा जइ वा दिट्ठं, न लविज्जोवघाइअं । न य केणइ उवाएणं, गिहिजोगं समायरे ॥ ३५५ ॥

निट्ठाणं रसनिज्जूढं, भद्दगं पावगंति वा । पुट्ठो वावि अपुट्ठो वा, लाभालाभं न निद्दिसे ॥ ३५६ ॥

न य भोअणंमि गिद्धो, चरे उंछं अयंपिरो । अफासुअं न भुंजिज्जा, कीअमुद्देसिआहडं ॥ ३५७ ॥

संनिहिं च न कुव्विज्जा, अणुमायंपि संजए । मुहाजीवी असंबद्धे, हविज्ज जगनिस्सिए ॥ ३५८ ॥

लूहवित्ती सुसंतुट्ठे, अप्पिच्छे सुहरे सिआ । आसुरत्तं न गच्छिज्जा, सुच्चा णं जिणसासणं ॥ ३५९ ॥

कन्नसुक्खेहिं सद्देहिं, पेम्मं नाभिनिवेसए । दारुणं कक्कसं फासं, काएण अहिआसए ॥ ३६० ॥
खुहं पिवासं दुस्सिज्जं, सीउण्हं अरइं भयं । अहिआसे अव्वहिओ, देहदुक्खं महाफलं ॥ ३६१ ॥
अत्थंगयंमि आइच्चे, पुरत्था अ अणुग्गए । आहारमइयं सव्वं, मणसावि ण पत्थए ॥ ३६२ ॥

तथा धुवंति, तथा ध्रुवं च-नित्यं च यो यस्य काल उक्तोऽनागतः परिभोगे च तस्मिंस्तत्प्रत्युपेक्षेत सिद्धान्त-
विधिना योगे सति सामर्थ्ये अन्यूनातिरिक्तं, किं तदित्याह-पात्रकम्बलं-पात्रग्रहणादलाबुदारुमयादिपरिग्रहः, कम्बलग्रह-
णादूर्णासूत्रमयपरिग्रहः, तथा शय्यां-वसतिं द्विकालं त्रिकालं च, उच्चारभुवं च-अनापातवदादि स्थंडिलं तथा संस्तारकं-
तृणमयादिरूपं, अथवाऽऽसनं-अपवादगृहीतं पीठकादि प्रत्युपेक्षेतेति ॥ ३५१ ॥ तथा उच्चारंति, उच्चारं प्रश्रवणं श्लेष्म
सिंघानं जल्लमिति प्रतीतानि, एतानि प्रासुकं प्रत्युपेक्ष्य स्थण्डिलमिति वाक्यशेषः, परिष्ठापयेदुत्सृजेत्संयत इति
॥ ३५२ ॥ उपाश्रयस्थानविधिरुक्तः, गोचरप्रवेशमधिकृत्याह-पविसित्तुत्ति, प्रविश्य परागारं-परगृहं, पानार्थं
भोजनस्य वा ग्लानादेः औषधार्थं वा यतं-गवाक्षाद्यनवलोकयंस्तिष्ठेदुचितदेशे, मितं यतनया भाषेतागमनप्रयोज-
नादि, न रूपेषु-दारकान्तादिषु मनः कुर्यादेवम्भूतान्येतानीति न मनो निवेशयेत्, रूपग्रहणं रसाद्युपलक्षणमिति
॥ ३५३ ॥ गोचरादिगत एव केनचित्तथाविधं पृष्टः एवं ब्रूयादित्याह-बहुंति, अथवोपदेशाधिकार एव सामान्येनाह-
बहुंति, बहु-अनेकप्रकारं शोभनाशोभनं शृणोति कर्णाभ्यां, शब्दजातमिति गम्यते, तथा बहु-अनेकप्रकारमेव

शोभनाशोभनभेदेनाक्षिभ्यां पश्यति, रूपजातमिति गम्यते, एवं न च दृष्टं श्रुतं सर्वं स्वपरोभयाहितमपि श्रुता ते पत्नी रुदतीत्येवमादि भिक्षुराख्यातुमर्हति, चारित्रोपघातित्वात्, अर्हति च स्वपरोभयहित दृष्टि( दृष्ट )स्ते राजानमुपशामयन् शिष्य इत्येवमादीति ॥ ३५४ ॥ एतदेव स्पष्टयन्नाह–सुयंति, श्रुतं वा अन्यतो यदि वा दृष्टं स्वयमेव न लपेत्त भाषेत, औपघातिकं–उपघातेन निर्वृत्तं तत्फलं वा, यथा–चौरस्त्वमित्यादि; अतोऽन्यच्छपेदपीति गम्यते, तथा न च केनचिदुपायेन सूक्ष्मयापि भङ्गया गृहियोगं–गृहिसम्बन्धं तद्बालग्रहणादिरूपं गृहिव्यापारं वा–प्रा( आ )रम्भरूपं समाचरेत्–कुर्यादिति ॥ ३५५ ॥ किंच–निट्ठाणंति, निष्ठान्नं–सर्वगुणोपेतं संभृतमन्नं रसनिर्यूढमेतद्विपरीतं कदशनं, एतदाश्रित्याद्यं भद्रकं द्वितीयं पापकमिति वा, पृष्टो वापि परेण कीदृग्लब्धमित्यपृष्टो वा स्वयमेव लाभालाभं निष्ठानादेर्न निर्दिशेद्, अथ साधु लब्धमसाधु वा शोभनमिदं अपरमशोभनं वेति ॥ ३५६ ॥ किंच–न येति, न च भोजने गृद्धः सन्निविशिष्टवस्तुलाभायेश्वरादिषु कुलेषु मुखमङ्गलिकया चरेत्, अपितु उञ्छं भावतो–ज्ञाताज्ञातमजल्पनशीलो धर्मलाभमात्राभिधायी चरेत्, तत्राप्यप्रासुकं–सचित्तं सन्मिश्रादि कथंचिद्गृहीतमपि न भुञ्जीत, तथा क्रीतमौद्देशिकाहृतं प्रासुकमपि न भुञ्जीत, एतद्विशोध्यविशोधिकोट्युपलक्षणमिति ॥ ३५७ ॥ संनिहिं चेति, सन्निधिं च प्राङ्निरूपितस्वरूपां न कुर्यादणुमात्रमपि–स्तोकमात्रमपि, संयतः–साधुः, तथा मुधाजीवीति पूर्ववत्, असम्बद्धः पद्मिनीपत्रोदकवद्गृहस्थैः, एवंभूतः सन् भवेत् जगन्निश्रितत्रसाचरसंरक्षणप्रतिबद्ध इति ॥ ३५८ ॥ किंच–लूहवित्ति, रूक्षैः–वल्लचनकादिभिर्वृत्तिरस्येति रूक्षवृत्तिः, सुसन्तुष्टो येन वा तेन वा सन्तोषगामी, अल्पेच्छो न्यूनोदरतया आहारपरित्यागी, सुभरः

रूक्षवृत्तिः स्यादित्यादि, तथा आसुरत्वं—स्यादल्पेच्छत्वादेव दुर्भिक्षादाविति फलं, प्रत्येकं वा स्यादिति क्रियायोगः,
क्रोधभावं न गच्छेत् क्वचित् स्वपक्षादौ श्रुत्वा जिनशासनं—क्रोधविपाकप्रतिपादकं वीतरागवचनं, जहा—" चउहिं ठाणेहिं
जीवा आसुरत्ताए कम्मं पकरिंति, तंजहा—कोहसीलयाए पाहुडसीलयाए जहा ठाणे जाव जं णं मए एस पुरिसे अण्णाणी
मिच्छादिट्ठी अक्कोसइ हणइ वा तं ण मे एस किंचि अवरज्झइत्ति, किं तु मम एयाणि वेयणिज्जाणि कम्माणि अवरज्झंतित्ति
सम्ममहियासमाणस्स निज्जरा एव भविस्सइ " त्ति ॥ ३५९ ॥ तथा कन्नत्ति, कर्णसौख्यहेतवः—कर्णसौख्याः शब्दा—
वेणुवीणादिसम्बन्धिनः तेषु प्रेम—रागं नाभिनिवेशयेत्—न कुर्यादित्यर्थः, तथा दारुणमनिष्टं कर्कशं—कठिनं स्पर्श-
मुपनतं सन्तं कायेनाधिसहेत्, न तत्र द्वेषं कुर्यात्, इत्यनेनाद्यन्तयो रागद्वेषनिराकरणेन सर्वेन्द्रियविषयेषु रागद्वेषप्रतिषेधो
वेदितव्य इति ॥ ३६० ॥ किंच—खुहंत्ति, क्षुधं—बुभुक्षां, पिपासां—तृषं, दुःशय्यां—विषमभूम्यादिरूपां, शीतोष्णं—
प्रतीतं, अरतिं—मोहनीयोद्भवां, भयं—व्याघ्रादिसमुत्थमतिसहेदेतत्सर्वमेव अव्यथितोऽदीनमनाः सन्, देहे दुःखं
महाफलं संचिन्त्येति वाक्यशेषः, तथा च शरीरे सत्येतद्दुःखं, शरीरं चाऽसारं, सम्यगतिसह्यमानं च मोक्षफलमेवेदमिति
॥ ३६१ ॥ किंच—अत्थंति, अस्तं गते आदित्ये—अस्तपर्वतं प्राप्ते अदर्शनीभूते वा पुरस्तात् चानुद्गते—प्रत्यूषस्यनुदित
इत्यर्थः, आहारात्मकं सर्व्वं—निरवशेषमाहारजातं मनसापि न प्रार्थयेत् किमङ्ग पुनर्वाचा कर्मणा वेति ॥ ३६२ ॥

अतिंतिणे अचवले, अप्पभासी मिआसणे । हविज्ज उअरे दंते, थोवं लद्धुं न खिंसए ॥ ३६३ ॥

न बाहिरं परिभवे, अत्ताणं न समुक्कसे । सुअलाभे न मज्जिज्जा, जच्चा तवस्सिबुद्धीए ॥ ३६४ ॥

से जाणमजाणं वा, कट्टु आहम्मिअं पयं। संवरे खिप्पमप्पाणं, बीअं तं न समायरे ॥ ३६५ ॥
अणायारं परक्कम्म, णेव गूहे न निण्हवे। सुई सया वियडभावे, असंसत्ते जिइंदिए ॥ ३६६ ॥
अमोहं वयणं कुज्जा, आयरियस्स महप्पणो। तं परिगिज्झ वायाए, कम्मुणा उववायए ॥ ३६७ ॥
अधुवं जीवियं नच्चा, सिद्धिमग्गं वियाणिया। विणियट्टिज्ज भोगेसु, आउं परिमिअप्पणो ॥ ३६८ ॥
बलं थामं च पेहाए, सद्धामारुग्गमप्पणो। खित्तं कालं च विन्नाय, तहप्पाणं निजुंजए ॥ ३६९ ॥
जरा जाव न पीडेई, वाही जाव न वड्ढई। जाविंदिआ न हायंति, ताव धम्मं समायरे ॥ ३७० ॥
कोहं माणं च मायं च, लोभं च पाववड्ढणं। वमे चत्तारि दोसे उ, इच्छंतो हिअमप्पणो ॥ ३७१ ॥
कोहो पीइं पणासेइ, माणो विणयनासणो। माया मित्ताइं(णि) नासेइ, लोभो सव्वविणासणो ॥३७२॥
उवसमेण हणे कोहं, माणं मद्दवया जिणे। मायं चऽज्जवभावेण, लोभं संतोसओ जिणे ॥ ३७३ ॥

कोहो य माणो य अणिग्गहीया, माया य लोभो य पवड्ढमाणा।
चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुणब्भवस्स ॥ ३७४ ॥

अतिन्तिनो नामालाभेऽपि नेपद्यत्किञ्चन-
दिवाप्यलभ्यमानेऽप्याहारे किमित्याह—अतिंतिणेत्ति, अतिन्तिनो भवेत्, तथा मिताशनः—मितभोक्ता
भापी, तथा अचपलो भवेत्—सर्वत्र स्थिर इत्यर्थः, तथा अल्पभाषी—कारणे परिमितवक्ता, तथा मिताशनः—मितभोक्ता
भवेदित्येवंभूतो भवेत्, तथोदरेदान्तो येन वा तेन वा वृत्तिशीलः, तथा स्तोकं लब्ध्वा न खिंसयेत्—देयं दातारं वा
न हेलयेदिति ॥ ३६३ ॥ मदवर्जनार्थमाह—न बाहिरंति, न बाह्यमात्मनोऽन्यं परिभवेत्तथाऽऽत्मानं न समुत्कर्षयेत्,
सामान्येनेत्थंभूतोऽहमिति, श्रुतलाभाभ्यां न माद्येत, पण्डितो लब्धिमानहं इत्येवं तथा जात्या तपस्त्वेन बुद्ध्या वा
न माद्येतेति वर्त्तते, जातिसम्पन्नः तपस्वी बुद्धिमान् अहमित्येवं, उपलक्षणं चैतत्कुलबलरूपाणां, कुलसम्पन्नो बलसम्पन्नोऽहं,
रूपसम्पन्नोऽहमित्येवं न माद्येदिति ॥ ३६४ ॥ ओघत आभोगानाभोगसेवितार्थमाह—सेति, स—साधुः जानन्नजानन्वा—
आभोगतोऽनाभोगतश्चेत्यर्थः, कृत्वा आधार्मिकं पदं कथञ्चिद्रागद्वेषाभ्यां मूलोत्तरगुणविराधनमिति भावः, संवरेत्क्षि-
प्रमात्मानं भावतो निवृत्त्या( निवर्त्त्या )लोचनादिना प्रकारेण, तथा द्वितीयं पुनस्तत्र समाचरेदनुबन्धदोषादिति ॥३६५॥
एतदेवाह—अणायारं ति, अनाचारं—सावद्ययोगं पराक्रम्य—आसेव्य गुरुसकाशे आलोचयन्न निगूहेत—न निह्नुवीत,
तत्र गूहनं—किञ्चित्कथनं, निह्नव—एकान्तापलापः, किंविशिष्टः सन्नित्याह—शुचिः—अकलुषमतिः सदा विकटभावः—प्रकट-
भावः, असंसक्तः—अप्रतिबद्धः क्वचिज्जितेन्द्रियो—जितेन्द्रियप्रमादः सन्निति ॥ ३६६ ॥ तथा—अमोहंति, अमोघं—
अवन्ध्यं वचनमिदं कुर्वित्यादिरूपं कुर्यादित्येवमित्यभ्युपगमेन, केषामित्याह—आचार्याणां महात्मनां श्रुतादिभिर्गुणैः,
तत्परिगृह्य वाचा एवमित्यभ्युपगमेन कर्मणोपपादयेत्—क्रियया सम्पादयेदिति ॥ ३६७ ॥ तथा अध्रुवंति, अध्रुवं—

अनित्यं मरणाशङ्कि जीवितं सर्वभावनिबन्धनं ज्ञात्वा, तथा सिद्धिमार्गं-सम्यग्ज्ञानदर्शनचारित्रलक्षणं विज्ञाय विनिवर्तेत भोगेभ्यो बन्धैकहेतुभ्यः, तथाऽध्रुवमप्यायुः परिमितं संवत्सरशतादिमानेन विज्ञायात्मनो विनिवर्तेत भोगेभ्य इति ॥३६८॥ बलं थामंति, (बलं-शारीरिकं स्थाम-इस्तादिविशेषोत्थं पेहाए प्रेक्ष्य श्रद्धामारोग्यं आत्मनः, क्षेत्रं "निवखलुपाणथंडिल्ले"त्यादि १२ गुणोपेतं विज्ञायात्मनः (कालं-योवनादिवयोरूपं) नियोजयेद्धर्मे ॥ ३६९ ॥ वृहल्लघुवृत्त्योरव्याख्याता अन्यकृतेति ) उपदेशाधिकारे प्रकान्ते इदमेव समर्थयन्नाह-जरत्ति, जरा-वयोहानिलक्षणा यावन्न पीडयति, व्याधिः-क्रियासामर्थ्यशत्रुर्यावन्न वर्द्धते, यावदिन्द्रियाणि-क्रियासामर्थ्योपकारीणि श्रोत्रादीनि न हीयन्ते तावदत्रान्तरे प्रस्ताव इतिकृत्वा धर्मं समाचरेच्चारित्रधर्ममिति ॥ ३७० ॥ तदुपायमाह-कोहंति, क्रोधं मानं च मायां च, लोभं च पापवर्धनं, सर्वे एते पापहेतव इति पापवर्द्धनव्यपदेशः, यदर्थेवमतो वमेच्चतुरो दोषान् एतानेव क्रोधादीन् हितमिच्छन्नात्मनः, एतद्वमने हि सर्वसम्पदिति ॥ ३७१ ॥ अवमने त्विह लोके एवापायमाह-कोहत्ति, क्रोधः-प्रीतिं प्रणाशयति, क्रोधान्धवचनतस्तदुच्छेददर्शनात्, मानो-विनयनाशनः, अवलेपेन मूर्खतया तदकरणोपलब्धेः, माया-मित्राणि नाशयति, कौटिल्यवर्तिनस्त्यागदर्शनात्, लोभः-सर्वविनाशनः, तस्त्वतस्त्रयाणामपि तद्भावभावित्वादिति ॥ ३७२ ॥ यत एवमतः-उवसमेणंति, उपशमेन-क्षान्तिरूपेण हन्यात्क्रोधं, उदयनिरोधोदयप्राप्तविफलीकरणेन, एवं मानं मार्दवेन-अनुत्सु(च्छ्रि)ततया जयेत्, उदयनिरोधादिनैव, मायां चार्जवभावेनाशठतया जयेदुदयनिरोधादिनैव, एवं लोभं सन्तोषतः निःस्पृहत्वेन जयेत्तदुदयनिरोधोदयप्राप्तविफलीकरणेनेति ॥ ३७३ ॥ क्रोधादीनामेव परलोकापाय-

माह–कोहत्ति, क्रोधश्च मानश्चानिगृहीतौ–उच्छृङ्खलौ, माया च लोभश्च विवर्धमानौ–वृद्धिं गच्छन्तौ, चत्वार एते क्रोधादयः कृत्स्नाः–सम्पूर्णाः, कृष्णा वा–क्लिष्टाः कषायाः सिञ्चन्त्यशुभभावजलेन मूलानि तथाविधकर्म्मरूपाणि पुनर्भवस्य–पुनर्जन्मतरोरिति ॥ ३७४ ॥

रायणिएसु विणयं पउंजे, धुवसीलयं समयं न हावइज्जा ।
कुम्मुव अल्लीणपलीणगुत्तो, परक्कमिज्जा तवसंजमंमि ॥ ३७५ ॥

निद्दं च न बहु मन्निज्जा, सप्पहासं विवज्जए। मिहो कहाहिं न रमे, सज्झायंमि रओ सया ॥ ३७६ ॥
जोगं च समणधम्मंमि, जुंजे अणलसो धुवं। जुत्तो य समणधम्मंमि, अट्ठं लहइ अणुत्तरं ॥ ३७७ ॥
इहलोगपारत्तहिअं, जेणं गच्छइ सुग्गइं । बहुस्सुयं पज्जुवासिज्जा, पुच्छिज्जत्थविणिच्छयं ॥ ३७८ ॥
हत्थं पायं च कायं च, पणिहाय जिइंदिए । अल्लीणगुत्तो निसिए, सगासे गुरुणो मुणी ॥ ३७९ ॥
न पक्खओ न पुरओ, नेव किच्चाण पिट्ठओ । न य ऊरुं समासिज्जा, चिट्ठिज्जा गुरुणंतिए ॥ ३८० ॥
अपुच्छिओ न भासिज्जा, भासमाणस्स अंतरा। पिट्ठिमंसं न खाइज्जा, मायामोसं विवज्जए ॥ ३८१ ॥
अप्पत्तियं जेण सिया, आसु कुप्पिज्ज वा परो। सव्वसो तं न भासिज्जा, भासं अहियगामिणिं॥ ३८२ ॥

दिट्ठं मिअं असंदिद्धं, पडिपुन्नं विअं जिअं । अयंपिरमणुव्विग्गं, भासं निसिर अत्तवं ॥ ३८३ ॥
आयारपन्नत्तिधरं, दिट्ठिवायमहिज्जगं । वायविक्खलिअं नच्चा, न तं उवहसे मुणी ॥ ३८४ ॥

यत एवमतः कषायनिग्रहार्थमिदं कुर्यादित्याह–रायणिएत्ति, रत्नाधिकेषु–चिरदीक्षितादिषु विनयं–अभ्युत्थानादिरूपं प्रयुञ्जीत, तथा ध्रुवशीलतां–अष्टादशशीलाङ्गसहस्रपालनरूपां, सततं–अनवरतं यथाशक्त्या न हापयेत्, तथा कूर्म इव–कच्छप इव आलीनप्रलीनगुप्तः अङ्गोपाङ्गानि सम्यक्संयम्येत्यर्थः, पराक्रमेत–प्रवर्तेत तपःसंयमे–तपः-प्रधाने संयमे इति ॥ ३७५ ॥ किं च–निद्दं चेति, निद्रां च न बहु मन्येत न प्रकामशायी स्यात्, सप्रहासं च–अतीव-प्रहासरूपं विवर्जयेत्, मिथःकथासु–राहस्यिकीषु न रमेत, स्वाध्याये–वाचनादौ रतः सदा, एवंभूतो भवेदिति ॥३७६॥ तथा–जोगं चेति, योगं च त्रिविधं–मनोवाक्कायव्यापारं श्रमणधर्मे–क्षान्त्यादिलक्षणे युञ्जीत अनलसः–उत्साहवान्, ध्रुवं–कालाद्यौचित्येन नित्यं सम्पूर्णं सर्वत्र प्रधानोपसर्जनभावेन वा, अनुप्रेक्षाकाले मनोयोगं, अध्ययनकाले वाग्योगं प्रत्युपेक्षणाकाले काययोगमिति, फलमाह–युक्त एवं व्यापृतः श्रमणधर्मे दशविधे अर्थं लभते–प्राप्नोत्यनुत्तरं भावार्थं ज्ञानादिरूपमिति ॥ ३७७ ॥ एतदेवाह–इहलोएत्ति, इहलोकपरत्रहितमिहाकुशलप्रवृत्तिदुःखनिरोधेन परत्र कुशलानुबन्धतः, उभयलोकहितमित्यर्थः, येनार्थेन ज्ञानादिना करणभूतेन गच्छति सुगतिं, पारम्पर्येण सिद्धिमित्यर्थः, उपदेशाधिकारे उक्तव्यतिकरसाधनोपायमाह–बहुश्रुतं–आगमवृद्धं पर्युपासीत–सेवेत, सेवमानश्च पृच्छेदर्थविनिश्चयमपाय-रक्षकं कल्याणावहं वाऽर्थावितथभावमिति ॥ ३७८ ॥ पर्युपासीनश्च–हत्थंति, हस्तं पादं च कायं च प्रणिधायेति

संयम्य जितेन्द्रियो निभृतो भूत्वा आलीनगुप्तो निषीदेत्, ईषल्लीन उपयुक्त इत्यर्थः, सकाशे गुरोर्मुनिरिति ॥३७९॥ किं च-न पक्खउत्ति, न पक्षतः-पार्श्वतः, न पुरतो-ऽग्रतो नैव कृत्यानामाचार्याणां पृष्ठतो मार्गतो निषीदेदिति वर्त्तते, यथासंख्यमविनयवन्दमानान्तरायादर्शनादिदोषप्रसङ्गात्, न चोरुं समाश्रित्योरोरुपर्यूरुं कृत्वा तिष्ठेद्गुर्वन्तिके, अविनयादिदोषप्रसङ्गादिति ॥ ३८० ॥ उक्तः कायप्रणिधिर्वाक्प्रणिधिमाह-अपुच्छिउत्ति, अपृष्टो निष्कारणं न भाषेत, भाषमाणस्य चान्तरेण न भाषेत, नेदमित्थं किं तर्ह्येवमिति, तथा पृष्ठिमांसं परोक्षदोषकीर्त्तनरूपं न खादेत् न भाषेत, मायामृषां-मायाप्रधानां मृषावाचं विवर्जयेदिति ॥ ३८१ ॥ किंच-अप्पत्तियन्ति, अप्रीतिर्येन स्यादिति प्राकृतशैल्या येनेति-यया भाषया भाषितया अप्रीतिमात्रं भवेत्, तथा आशु-शीघ्रं, कुप्येद्वा परो रोपकार्यं दर्शयेत्, सर्वशः-सर्वावस्थासु तामित्थंभूतां न भाषेत भाषां, अहितगामिनीमुभयलोकविरुद्धामिति ॥ ३८२ ॥ भाषणोपायमाह-दिट्ठंति, दृष्टां-दृष्टार्थविषयां मितां-स्वरूपप्रयोजनाभ्यामसंदिग्धां-निःशंकितां प्रतिपूर्णां स्वरादिभिर्व्यक्तां-अलक्षां जितां परिजि( चि )ताम् अजल्पनशीलां नोच्चैर्लग्नविलग्नामनुद्विग्नां-नोद्वेगकारिणीमेवंभूतां भाषां निसृजेत् ब्रूयादात्मवान् सचेतन इति ॥ ३८३ ॥ प्रस्तुतोपदेशाधिकार एवेदमाह-आयारेति, आचारप्रज्ञप्तिधरमिति आचारधरः स्त्रीलिङ्गादीनि जानाति प्रज्ञप्तिधरस्तान्येव सविशेषाणीत्येवंभूतं, तथा दृष्टिवादमधीयानं प्रकृतिप्रत्ययलोपागमवर्णविकारादिवेदिनं वाग्विस्खलितं ज्ञात्वा विविधमनेकैः प्रकारैः लिंगभेदादिभिः स्खलितं विज्ञाय न तमाचारादिधरमुपहसेन्मुनिः, अहो नु खल्वाचारादिधरस्य वाचि कौशलमित्येवं, इह च दृष्टिवादमधीयानमित्युक्तमत इदं गम्यते नाधीतदृष्टिवादं, तस्य ज्ञानाप्रमादातिशयतः

स्खलनाऽसम्भवात्, यद्येवंभूतस्यापि स्खलितं सम्भवति न चैनमित्युपहसेदित्युपदेशस्ततोऽन्यस्य सुतरां सम्भवति, नासौ हसितव्य इति ॥ ३८४ ॥

नक्खत्तं सुमिणं जोगं, निमित्तं मंतभेसजं । गिहिणो तं न आइक्खे, भूयाहिगरणं पयं ॥ ३८५ ॥
अन्नट्ठं पगडं लयणं, भइज्ज सयणासणं । उच्चारभूमिसंपन्नं, इत्थीपसुविवज्जियं ॥ ३८६ ॥
विवित्ता य भवे सिज्जा, नारीणं न लवे कहं । गिहिसंथवं न कुज्जा, कुज्जा साहूहिं संथवं ॥ ३८७ ॥
जहा कुक्कुडपोअस्स, निच्चं कुललओ भयं । एवं खु बंभयारिस्स, इत्थीविग्गहओ भयं ॥ ३८८ ॥
चित्तभित्तिं न निज्झाए, नारिं वा सुअलंकिअं । भक्खरंपिव दट्ठूणं, दिट्ठिं पडिसमाहरे ॥ ३८९ ॥
हत्थपायपडिच्छिन्नं, कण्णनासविगप्पिअं । अवि वाससयं नारिं, बंभचारी विवज्जए ॥ ३९० ॥
विभूसा इत्थिसंसग्गो, पणीअं रसभोअणं । नरस्सऽत्तगवेसिस्स, विसं तालउडं जहा ॥ ३९१ ॥
अंगपच्चंगसंठाणं, चारुल्लविअपेहिअं । इत्थीणं तं न निज्झाए, कामरागविवड्ढणं ॥ ३९२ ॥
विसएसु मणुन्नेसु, पेमं नाभिनिवेसए । अणिच्चं तेसिं विन्नाय, परिणामं पुग्गलाण उ ॥ ३९३ ॥
पोग्गलाणं परीणामं, तेसिं नच्चा जहा तहा । विणीअतण्हो विहरे, सीईभूएण अप्पणा ॥ ३९४ ॥

किंच-नक्खत्तंति, गृहिणा पृष्टः सन् नक्षत्रं-अश्विन्यादि, स्वप्नं-शुभाशुभफलमनुभूतादि योगं-वशीकरणादि निमित्तमतीतादि मन्त्रं-वृश्चिकमन्त्रादि भेषजं-अतीसाराद्यौषधं, गृहिणां-असंयतानां तदेतन्नाचक्षीत, किंविशिष्ट-मित्याह-भूताधिकरणं पदमिति भूतानि-एकेन्द्रियादीनि संघट्टनादिनाऽधिक्रियन्तेऽस्मिन्निति, ततश्च तदप्रीतिपरिहारार्थ-मित्येवं ब्रूयात्-अनधिकारोऽत्र तपस्विनामिति ॥ ३८५ ॥ किंच अन्नट्ठंति, अन्यार्थं प्रकृतं न साधुनिमित्तमेव निवर्त्तितं, लयनं-स्थानं वसतिरूपं भजेत्-सेवेत, शयनासनमित्यन्यार्थं प्रकृतं संस्तारकपीठकादि सेवेतेत्यर्थः, एतदेव विशेष्यते-उच्चारभूमिसम्पन्नं-उच्चारप्रश्रवणादिभूमियुक्तं, तद्रहिते असकृत्तदर्थं निर्गमनादिदोषात्तथा स्त्रीपशुविवर्जितमिति, एकग्रहणे तज्जातीयग्रहणात् स्त्रीपशुपण्डकविवर्जितं रूपा(रूया)द्यालोकनादिरहितमिति ॥ ३८६ ॥ तदित्थंभूतं लयनं सेव-मानस्य धर्मकथाविधिमाह-विवित्ता यत्ति, विविक्ता च तदन्यसाधुभिर्विवर्जिता, चशब्दात्तथाविधभुजङ्गप्रायैकपुरुष-संयुक्ता भवेच्छय्या-वसत्यादि ततो नारीणां-स्त्रीणां न कथयेत्कथां, शङ्कादिदोषप्रसङ्गादौचित्यं विज्ञाय पुरुषाणां तु कथयेत्, अविविक्तायां नारीणामपीति, तथा गृहिसंस्तवं-गृहिपरिचयं न कुर्यात्तत्स्नेहादिदोषसम्भवात्, कुर्यात्सा-धुभिः सह संस्तवं-परिचयं, कल्याणमित्रयोगेन कुशलपक्षवृद्धिभावत इति ॥ ३८७ ॥ कथंचिद्गृहिसंस्तवभावेऽपि स्त्री-संस्तवो न कर्त्तव्य एवेत्यत्र कारणमाह-जहत्ति, यथा कुक्कुटपोतस्य-कुक्कुटशिशोर्नित्यं-सर्वकालं कुललतो मार्जाराद्भयं एवं ब्रह्मचारिणः साधोः स्त्रीविग्रहात्-स्त्रीशरीराद् भयं, विग्रहग्रहणं मृतविग्रहादपि भयख्यापनार्थमिति ॥ ३८८ ॥ यत-श्चैवमतः-चित्तभित्तिंति, चित्रभित्तिं-चित्रगतां स्त्रियं न निरीक्षेत-न पश्येत्, नारीं वा सचेतनामेव स्वलङ्कृतां,

उपलक्षणमेतदनलङ्कृतां च न निरीक्षेत, कथंचिद्दर्शनयोगेऽपि भास्करमिवादित्यमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत्-द्रागेव निवर्त्तयेदिति ॥ ३८९ ॥ किं बहुना ? हत्थत्ति, हस्तपादप्रतिच्छिन्नां-प्रतिच्छिन्नहस्तपादां कर्णनासाविकृत्तामिति-निकृत्तकर्णनासामपि वर्षशतिकां नारीं, एवं वृद्धामपि किमङ्ग पुनस्तरुणीं ?, तां तु सुतरामेव, ब्रह्मचारी-चारित्रधनो महाधन इव तस्करान्विवर्जयेदिति ॥ ३९० ॥ अपिच-विभूसेति, विभूषा-वस्त्रादिराढा, स्त्रीसंसर्गः-येन केनचित्प्रकारेण स्त्रीसम्बन्धः, प्रणीतरसभोजनं-गलत्स्नेहरसाभ्यवहारः, एतत्सर्वमेव विभूषादि नरस्यात्मगवेषिणः-आत्महितान्वेषणपरस्य विषं तालपुटं यथा-तालमात्रव्यापत्तिकरविषकल्पमहितमिति ॥ ३९१ ॥ किंच-अंगपच्चंगेति, अङ्गप्रत्यङ्गसंस्थानमिति, अङ्गानि-शिरःप्रभृतीनि प्रत्यङ्गानि-नयनादीनि एतेषां संस्थानं-विन्यासविशेषं, तथा चारुशोभनं लपितप्रेक्षितं-लपितं-जल्पितं प्रेक्षितं-निरीक्षितं स्त्रीणां सम्बन्धि, तदङ्गप्रत्यङ्गसंस्थानादि न निरीक्षेत-न पश्येत्, कुत इत्याह-कामरागविवर्द्धनमिति, एतद्धि निरीक्ष्यमाणं मोहदोषान्मैथुनाभिलापं वर्द्धयति, अत एवास्य प्राक् स्त्रीणां निरीक्षणप्रतिषेधात् गतार्थतायामपि प्राधान्यख्यापनार्थो भेदेनोपन्यास इति ॥ ३९२ ॥ किंच-विसएसुत्ति, विषयेषु-शब्दादिषु, मनोज्ञेषु-इन्द्रियानुकूलेषु, प्रेम-रागं नाभिनिवेशयेत्-न कुर्यात्, एवममनोज्ञेषु द्वेषं, आह-उक्तमेवेदं प्राक् "कन्नसोक्खेहीत्यादौ" (गा. ३६०) किमर्थं पुनरुपन्यास इति ?, उच्यते-कारणविशेषाभिधानेन विशेषोपलम्भार्थमिति, आह च-अनित्यमेव-परिणामानित्यतया तेषां-पुद्गलानां, तुशब्दात् शब्दादिविषयसम्बन्धिनामितियोगः, विज्ञाय-अवेत्य जिनवचनानुसारेण, किमित्याह-परिणामं-पर्यायान्तरापत्तिलक्षणं, ते हि मनोज्ञा अपि क्षणादमनोज्ञतया परिणमन्ति,

उत्तमं-प्रधानं प्राप्त इत्यर्थः, तामेव श्रद्धामप्रतिपतितया प्रवर्धमानामनुपालयेद्यत्नेन, क्वेत्याह-गुणेषु-मूलगुणादिलक्षणेषु आचार्यसंमतेषु-तीर्थकरादिबहुमतेषु, अन्ये तु श्रद्धाविशेषणमित्येतद्व्याचक्षते, तामेव श्रद्धामनुपालयेद्गुणेषु, किंभूतां-आचार्यसम्मतां, न तु स्वाग्रहकलङ्कितामिति ॥ ३९५ ॥ आचारप्रणिधिफलमाह-तवं चिमंति, तपश्चेदमनशनादिरूपं साधु लोकप्रतीतं संयमयोगं च-पृथिव्यादिविषयं संयमव्यापारं च स्वाध्यायादियोगं च-वाचनादिव्यापारं सदा-सर्वकालमधिष्ठाता-तपःप्रभृतीनां कर्तेत्यर्थः, इह च तपोऽभिधानात्तद्ग्रहणेऽपि स्वाध्याययोगस्य प्राधान्यख्यापनार्थं भेदेनाभिधानमिति । स एवंभूतः शूर इव-विक्रान्तभट इव सेनया-चतुरङ्गरूपया इन्द्रियकषायादिसेनया निरुद्धः सन् समाप्तायुधः-संपूर्णतपःप्रभृतिखड्गाद्यायुधः, अलं-अत्यर्थमात्मनो भवति, संरक्षणाये अलं च परेषां निवा(राक)रणायेति ॥ ३९६ ॥ एतदेव स्पष्टयन्नाह-सज्झायत्ति, स्वाध्याय एव सद्ध्यानं स्वाध्यायसद्ध्यानं तत्र रतस्य-आसक्तस्य त्रातुः-स्वपरोभयत्राणशीलस्य अपापभावस्य-लब्ध्याद्यपेक्षारहिततया शुद्धचित्तस्य तपसि-अनशनादौ यथाशक्त्या रतस्य विशुद्ध्यते अपैति, यदस्य मायोर्मलं-कर्ममलं पुराकृतं-जन्मान्तरोपात्तं, दृष्टान्तमाह-समीरितं-प्रेरितं, रूप्यमलमिव ज्योतिषा-अग्निनेति ॥ ३९७ ॥ ततश्च-से तारिसेत्ति, स तादृशः अनन्तरोदितगुणयुक्तः साधुर्दुःखसहः-परीषहजेता, जितेन्द्रियः-पराजितश्रोत्रेन्द्रियादिः, श्रुतेन युक्तो-विद्यावानित्यर्थः, अममः-सर्वत्र ममत्वरहितः, अकिञ्चनो-द्रव्यभावकिञ्चनरहितः, विराजते-शोभते, कर्मघने-ज्ञानावरणीयादिकर्ममेघे अपगते सति, निदर्शनमाह-कृत्स्नाभ्रपुटापगमे इव चन्द्रमा इति यथा कृत्स्ने अभ्रपुटे कृष्णे वा अपगते सति चन्द्रमा विराजते शरदि, तद्वदयमपग-

तकर्म्मघनः समासादितकेवलालोको विराजते ॥ ३९८ ॥ ब्रवीमीति पूर्ववत् ॥

इत्याचारप्रणिध्याख्यमष्टममध्ययनं समाप्तम् ॥



व्याख्यातमाचारप्रणिध्यध्ययनम् । अधुना विनयसमाध्याख्यमारभ्यते–अस्य चायमभिसम्बन्धः–इहानन्तरा-ध्ययने निरवद्यं वच आचारे प्रणिहितस्य भवतीति, तत्र यत्नवता भवितव्यमित्येतदुक्तं, इह त्वाचारप्रणिहितो यथोचित-विनयसंपन्न एव भवतीत्येतदुच्यते । उक्तं च–" आयारपणिहाणंमि, से सम्मं वट्टई बुहे । णाणाईणं विणीए जे, मुक्खट्ठा निविगिच्छए ॥ १ ॥ " इत्यनेन सम्बन्धेनायातमिदमध्ययनमिति—

थंभा व कोहा व मयप्पमाया, गुरुस्सगासे विणयं न सिक्खे ( तिट्ठइ ) ।
सो चेव उ तस्स अभूइभावो, फलं व कीअस्स वहाय होइ ॥ ३९९ ॥

थंभा वेत्यादि, स्तम्भाद्वा मानाद्वा जात्यादिनिमित्तात् क्रोधाद्वा–अक्षान्तिलक्षणात्, मायाप्रमादादिति, मायातो–निकृतिरूपायाः प्रमादात्–निद्रादेः सकाशात्, किमित्याह–गुरोः सकाशे–आचार्यादेः समीपे विनयमासेवना-शिक्षादिभेदभिन्नं न शिक्षते–नोपादत्ते, तत्र स्तम्भात् कथमहं जात्यादिमान् जात्यादिहीनसकाशे शिक्षामीति, एवं क्रोधात्क-चिद्वितथकरणचोदितो रोषाद्वेति, मायातः 'शूलं मे बाधत' इत्यादिव्याजेन, प्रमादात् प्रक्रान्तोचितमनवबुद्ध्यमानो निद्रादि-व्यासक्तेन, स्तम्भादिक्रमोपन्यासश्चेत्थमेवामीषां विनयविघ्नहेतुतामाश्रित्य प्राधान्यख्यापनार्थः, तदेवं स्तम्भादिभ्यो गुरोः सकाशे

उत्तमं-प्रधानं प्राप्त इत्यर्थः, तामेव श्रद्धामप्रतिपतितया प्रवर्धमानामनुपालयेद्यत्नेन, क्वेत्याह-गुणेषु-मूलगुणादिलक्षणेषु आचार्यसंमतेषु-तीर्थकरादिबहुमतेषु, अन्ये तु श्रद्धाविशेषणमित्येतद्व्याचक्षते. तामेव श्रद्धामनुपालयेद्गुणेषु, किंभूतां-आचार्यसम्मतां, न तु स्वाग्रहकलङ्कितामिति ॥ ३९५ ॥ आचारप्रणिधिफलमाह-तवं चिमंति, तपश्चेदमनशनादिरूपं साधु लोकप्रतीतं संयमयोगं च-पृथिव्यादिविषयं संयमव्यापारं च स्वाध्यायादियोगं च-वाचनादिव्यापारं सदा-सर्वकालमधिष्ठाता-तपःप्रभृतीनां कर्त्तेत्यर्थः, इह च तपोऽभिधानात्तद्ग्रहणेऽपि स्वाध्याययोगस्य प्राधान्यख्यापनार्थं भेदेनाभिधानमिति । स एवंभूतः शूर इव-विक्रान्तभट इव सेनया-चतुरङ्गरूपया इन्द्रियकषायादिसेनया निरुद्धः सन् समाप्तायुधः-संपूर्णतपःप्रभृतिखड्गाद्यायुधः, अलं-अत्यर्थमात्मनो भवति, संरक्षणाये अलं च परेषां निरा(राक)रणायेति ॥ ३९६ ॥ एतदेव स्पष्टयन्नाह-सज्झायत्ति, स्वाध्याय एव सद्ध्यानं स्वाध्यायसद्ध्यानं तत्र रतस्य-आसक्तस्य त्रातुः-स्वपरोभयत्राणशीलस्य अपापभावस्य-लब्ध्याद्यपेक्षारहिततया शुद्धचित्तस्य तपसि-अनशनादौ यथाशक्त्या, रतस्य विशुद्ध्यते अपैति, यदस्य साधोर्मलं-कर्ममलं पुराकृतं-जन्मान्तरोपात्तं, दृष्टान्तमाह-समीरितं-प्रेरितं, रूप्यमलमिव ज्योतिषा-अग्निनेति ॥ ३९७ ॥ ततश्च-से तारिसेत्ति, स तादृश अनन्तरोदितगुणयुक्तः साधुर्दुःखसहः-परीषहजेता. जितेन्द्रियः-पराजितश्रोत्रेन्द्रियादिः, श्रुतेन युक्तो-विद्यावानित्यर्थः, अममः-सर्वत्र ममत्वरहितः, अकिञ्चनो-द्रव्यभावकिञ्चनरहितः, विराजते-शोभते, कर्म्मघने-ज्ञानावरणीयादिकर्ममेघे अपगते सति, निदर्शनमाह-कृत्स्नाभ्रपुटापगमे इव चन्द्रमा इति यथा कृत्स्ने अभ्रपुटे कृष्णे वा अपगते सति चन्द्रमा विराजते शरदि, तद्वदसावपग-

तकर्मघनः समासादितकेवलालोको विराजते ॥ ३९८ ॥ ब्रवीमीति पूर्ववत् ॥

इत्याचारप्रणिध्याख्यमष्टममध्ययनं समाप्तम् ॥



व्याख्यातमाचारप्रणिध्यध्ययनम् । अधुना विनयसमाध्याख्यमारभ्यते–अस्य चायमभिसम्बन्धः–इहानन्तराध्ययने निरवद्यं वच आचारे प्रणिहितस्य भवतीति, तत्र यत्नवता भवितव्यमित्येतदुक्तं, इह त्वाचारप्रणिहितो यथोचितविनयसंपन्न एव भवतीत्येतदुच्यते । उक्तं च–" आयारपणिहाणंमि, से सम्मं वट्टई बुहे । णाणाईणं विणीए जे, मुक्खट्ठा निव्विगिच्छए ॥ १ ॥ " इत्यनेन सम्बन्धेनायातमिदमध्ययनमिति—

थंभा व कोहा व मयप्पमाया, गुरुस्सगासे विणयं न सिक्खे ( तिट्ठइ ) ।
सो चेव उ तस्स अभूइभावो, फलं व कीअस्स वहाय होइ ॥ ३९९ ॥

थंभा वेत्यादि, स्तम्भाद्वा मानाद्वा जात्यादिनिमित्तात् क्रोधाद्वा–अक्षान्तिलक्षणात्, मायाप्रमादादिति, मायातो–निकृतिरूपायाः प्रमादात्–निद्रादेः सकाशात्, किमित्याह–गुरोः सकाशे–आचार्यादेः समीपे विनयमासेवनाशिक्षादिभेदभिन्नं न शिक्षते–नोपादत्ते, तत्र स्तम्भात् कथमहं जात्यादिमान् जात्यादिहीनसकाशे शिक्षामीति, एवं क्रोधात्क्वचिद्वितथकरणचोदितो रोषाद्वेति, मायातः 'शूलं मे बाधत' इत्यादिव्याजेन, प्रमादात् प्रक्रान्तोचितमनवबुध्यमानो निद्रादिव्यासङ्गेन, स्तम्भादिक्रमोपन्यासश्चेत्थमेवामीषां विनयविघ्नहेतुतामाश्रित्य प्राधान्यख्यापनार्थः, तदेवं स्तम्भादिभ्यो गुरोः सकाशे

उत्तमं-प्रधानं श्राद्ध इत्यर्थः, तामेव श्रद्धामप्रतिपतितया प्रवर्धमानामनुपालयेद्यत्नेन, क्वेत्याह-गुणेषु-मूलगुणादिलक्षणेषु आचार्यसंमतेषु-तीर्थकरादिबहुमतेषु, अन्ये तु श्रद्धाविशेषणमित्येतद्व्याचक्षते, तामेव श्रद्धामनुपालयेद्गुणेषु, किंभूतां-आचार्यसम्मतां, न तु स्वाग्रहकलङ्कितामिति ॥ ३९५॥ आचारप्रणिधिफलमाह-तवं चिमंति, तपश्चेदमनशनादिरूपं साधु लोकप्रतीतं संयमयोगं च-पृथिव्यादिविषयं संयमव्यापारं च स्वाध्यायादियोगं च-वाचनादिव्यापारं सदा-सर्व-कालमधिष्ठाता-तपःप्रभृतीनां कर्तेत्यर्थः, इह च तपोऽभिधानात्तद्ग्रहणेऽपि स्वाध्याययोगस्य प्राधान्यख्यापनार्थं भेदेना भिधानमिति । स एवंभूतः शूर इव-विक्रान्तभट इव सेनया-चतुरङ्गरूपया इन्द्रियकषायादिसेनया निरुद्धः सन् समाप्तायुधः-संपूर्णतपःप्रभृतिखड्गाद्यायुधः, अलं-अत्यर्थमात्मनो भवति, संरक्षणायै अलं च परेषां निवा(रा)रणायेति ॥ ३९६ ॥ एतदेव स्पष्टयन्नाह-सज्झायत्ति, स्वाध्याय एव सद्ध्यानं स्वाध्यायसद्ध्यानं तत्र रतस्य-आसक्तस्य त्रातुः-स्वपरोभयत्राणशीलस्य अपापभावस्य-लब्ध्याद्यपेक्षारहिततया शुद्धचित्तस्य तपसि-अनशनादौ यथाशक्त्या, रतस्य विशुद्ध्यते अपैति, यदस्य साधोर्मलं-कर्ममलं पुराकृतं-जन्मान्तरोपात्तं, दृष्टान्तमाह-समीरितं-प्रेरितं, रूप्य-मलमिव ज्योतिषा-अग्निनेति ॥ ३९७ ॥ ततश्च-से तारिसेत्ति, स तादृश अनन्तरोदितगुणयुक्तः मापुर्दुःखसहः-परीषहजेता, जितेन्द्रियः-पराजितश्रोत्रेन्द्रियादिः, श्रुतेन युक्तो-विद्यावानित्यर्थः, अममः-सर्वत्र ममत्वरहितः, अकिञ्चनो-द्रव्यभावकिञ्चनरहितः, विराजते-शोभते, कर्मघने-ज्ञानावरणीयादिकर्ममेघे अपगते सति, निदर्शनमाह-कृत्स्नाभ्रपुटापगमे इव चन्द्रमा इति यथा कृत्स्ने अभ्रपुटे कृष्णे वा अपगते सति चन्द्रमा विराजते शरदि, तद्वदसावपग-

तकर्म्मघनः समासादितकेवलालोको विराजते ॥ ३९८ ॥ ब्रवीमीति पूर्ववत् ॥

इत्याचारप्रणिध्याख्यमष्टममध्ययनं समाप्तम् ॥



व्याख्यातमाचारप्रणिध्यध्ययनम् ॥ अधुना विनयसमाध्याख्यमारभ्यते–अस्य चायमभिसम्बन्धः–इहानन्तराध्ययने निरवद्यं वच आचारे प्रणिहितस्य भवतीति, तत्र यत्नवता भवितव्यमित्येतदुक्तं, इह त्वाचारप्रणिहितो यथोचितविनयसंपन्न एव भवतीत्येतदुच्यते। उक्तं च–" आयारपणिहाणंमि, से सम्मं वट्टई बुहे। णाणाईणं विणीए जे, मुक्खट्ठा निविगिच्छए ॥ १ ॥ " इत्यनेन सम्बन्धेनायातमिदमध्ययनमिति—

थंभा व कोहा व मयप्पमाया, गुरुस्सगासे विणयं न सिक्खे ( तिट्ठइ )।
सो चेव उ तस्स अभूइभावो, फलं व कीअस्स वहाय होइ ॥ ३९९ ॥

थंभा वेत्यादि, स्तम्भाद्वा मानाद्वा जात्यादिनिमित्तात् क्रोधाद्वा–अक्षान्तिलक्षणात्, मायाप्रमादादिति, मायातो–निकृतिरूपायाः प्रमादात्–निद्रादेः सकाशात्, किमित्याह–गुरोः सकाशे–आचार्यादेः समीपे विनयमासेवनाशिक्षादिभेदभिन्नं न शिक्षते–नोपादत्ते, तत्र स्तम्भात् कथमहं जात्यादिमान् जात्यादिहीनसकाशे शिक्षामीति, एवं क्रोधात्कचिद्वितथकरणचोदितो रोषादेति, मायातः 'शूलं मे बाधते' इत्यादिव्याजेन, प्रमादात् प्रक्रान्तोचितमनवबुध्यमानो निद्रादिव्यासङ्गेन, स्तम्भादिक्रमोपन्यासश्चेत्थमेवामीषां विनयविघ्नहेतुतामाश्रित्य प्राधान्यख्यापनार्थः, तदेवं स्तम्भादिभ्यो गुरोः सकाशे

विनय न शिक्षते, अन्ये तु पठन्ति-गुरो सकाशे विनये न तिष्ठति-विनये न वर्त्तते, विनय नासेवत इत्यर्थः । इह च स एव तु स्तम्भादिर्विनयशिक्षाविघ्नहेतुस्तस्य जडमतेः, अभूतिभाव इति-अभूतेर्भावोऽभूतिभावः, असद्भाव इत्यर्थः, किमित्याह-वधाय भवति-गुणलक्षणभावप्राणविनाशाय भवति, दृष्टान्तमाह-फलमिव कीचकस्य-कीचको-वंशस्तस्य यथा फलं वधाय भवति, सति तस्मिंस्तस्य विनाशात्तद्वदिति ॥ ३९९ ॥

जे आवि मंदित्ति गुरु विइत्ता, डहरे इमे अप्पसुअत्ति नच्चा ।
हीलंति मिच्छं पडिवज्जमाणा, करंति आसायण ते गुरूणं ॥ ४०० ॥
पयईइ मंदावि हवंति एगे, डहरावि अ जे सुअबुद्धोववेआ ।
आयारमंतो गुणसुट्ठिअप्पा, जे हीलिआ सिहिरिव भास कुज्जा ॥ ४०१ ॥
जे आवि नागं डहरंति नच्चा, आसायए से अहिआय होइ ।
एवायरिअंपि हु हीलयंतो, निअच्छई जाइपहं खु मंदो ॥ ४०२ ॥
आसीविसो वावि परं सुरुट्ठो, किं जीवनासाउ परं नु कुज्जा ? ।
आयरिअपाया पुण अप्पसन्ना, अबोहिआसायण नत्थि मुक्खो ॥ ४०३ ॥

जो पावगं जलिअमवक्कमिज्जा, आसीविसं वावि हु कोवइज्जा ।
जो वा विसं खायइ जीविअट्ठी, एसोवमाऽऽसायणया गुरूणं ॥ ४०४ ॥
सिया हु से पावय नो डहिज्जा, आसीविसो वा कुविओ न भक्खे ।
सिया विसं हालहलं न मारे, न यावि मुक्खो गुरुहीलणाए ॥ ४०५ ॥
जो पव्वयं सिरसा भेत्तुमिच्छे, सुत्तं व सिंहं पडिबोहइज्जा ।
जो वा दए सत्तिअग्गे पहारं, एसोवमाऽऽसायणया गुरूणं ॥ ४०६ ॥
सिया हु सीसेण गिरिंपि भिंदे, सिया हु सीहो कुविओ न भक्खे ।
सिया न भिंदेज्ज व सत्तिअग्गं, न यावि मुक्खो गुरुहीलणाए ॥ ४०७ ॥
आयरियपाया पुण अप्पसन्ना, अबोहिआसायण नत्थि मुक्खो ।
तम्हा अणाबाहसुहाभिकंखी, गुरुप्पसायाभिमुहो रमिज्जा ॥ ४०८ ॥

किंच—जे यावित्ति, ये चापि केचन द्रव्यसाधवोऽगम्भीराः, किमित्याह—मन्द इति गुरुं विदित्वा—क्षयोपशम-

वैचित्र्यात्- तन्त्रयुक्त्यालोचनाऽसमर्थः सत्प्रज्ञाविकल इति-स्वमाचार्यं ज्ञात्वा । तथा कारणान्तरस्थापितमप्राप्तवयसं-डह रोऽयं-अप्राप्तवयाः खल्वयं, तथा अल्पश्रुत इत्यनधीतागम इति विज्ञाय, किमित्याह-हीलयन्ति-सूयया असूयया वा खिंसयन्ति, सूयया अतिप्रज्ञः त्वं वयोवृद्धो बहुश्रुत इति, असूयया तु मन्दप्रज्ञस्त्वमित्याद्यभिदधति, मिथ्यात्वं प्रतिपद्यमाना इति; गुरुर्न हीलनीय इति तत्त्वमन्यथाऽवगच्छन्तः कुर्वन्त्याशातनां-लघुतापादनरूपां ते-द्रव्यसाधवः गुरूणां-आचार्याणां, तत्स्थापनाया अबहुमानेन, एकगुर्वाशातनायां सर्वेषामाशातनेति बहुवचनं, अथवा कुर्वन्त्याशातनां स्वसम्यग्दर्शनादिभावापहासरूपां, ते गुरूणां सम्बन्धिनीं, तन्निमित्तत्वादिति ॥ ४०० ॥ अतो न कार्या हीलनेत्याह-पगईए त्ति, प्रकृत्या-स्वभावेन कर्मवैचित्र्यात् मन्दा अपि-सद्बुद्धिरहिता अपि भवन्त्येके-केचन वयोवृद्धा अपि, तथा डहरा अपि च-अपरिणता अपि च वयसा अन्ये अमन्दा भवन्तीति वाक्यशेषः, किंविशिष्टा इत्याह-ये श्रुतबुद्ध्युपपेतास्तदा सत्प्रज्ञावन्तः, श्रुतेन बुद्धिभावेन वा भाविनीं वृत्तिमाश्रित्य अल्पश्रुता इति; सर्वथा आचारवन्तः-ज्ञानाद्याचारसमन्विताः गुणसुस्थितात्मानः-गुणेषु-संग्रहोपग्रहादिषु सुष्ठु-भावसारं स्थित आत्मा येषां ते तथाविधाः, न हीलनीयाः, ये हीलिताः-खिंसिताः शिखीव-अग्निरिवेन्धनसङ्घातं भस्मसात्कुर्युः-ज्ञानादिगुणसङ्घातमपनयेयुरिति ॥ ४०१ ॥ विशेषेण डहरहीलनादोषमाह-जे यावित्ति, यश्चापि कश्चिदज्ञो नागं-सर्पं, डहर इति-बाल इति, ज्ञात्वा-विज्ञाय आशातयति-कलिञ्चादिना कदर्थयति स-कदर्थ्यमानो नागः से-तस्य कदर्थकस्य-अहिताय भवति, भक्षणेन प्राणनाशनात्, एषः दृष्टान्तोऽयमर्थोपनयः-एवमाचार्यमपि कारणतोऽपरिणतमेव स्थापितं हीलयन् निर्गच्छति

जातिपन्थानं-द्वीन्द्रियादिजातिमार्गं मन्दः-अज्ञः, संसारे परिभ्रमतीति ॥ ४०२ ॥ अत्रैव दृष्टान्तदार्ष्टान्तिकयोर्मह-
दन्तरमित्येतदाह-आसीत्ति, आशीविषश्चापि-सर्पोऽपि परं सुरुष्टः सन्-सुक्रुद्धः सन् किं जीवितनाशात्-मृत्योः
परं नु कुर्यात् ? न किञ्चिदपीत्यर्थः, आचार्यपादाः पुनरप्रसन्ना हीलनया अनुग्रहेऽप्रवृत्ताः, किं कुर्वन्तीत्याह-अबोधिं-
निमित्तहेतुत्वेन मिथ्यात्वसंहतिं, तदाशातनया मिथ्यात्वबन्धात्, यतश्चैवमतश्चाशातनया गुरोर्नास्ति मोक्षः, अबोधि-
सन्तानसम्बन्धेनानन्तसंसारिकत्वादिति ॥ ४०३ ॥ किंच-जो पावगत्ति, यः पावकं-अग्निं ज्वलितं सन्तं अपक्रामेत्-
अवष्टभ्य तिष्ठति, आशीविषं वापि हि-भुजङ्गमं वापि हि कोपयेत्-रोषं ग्राहयेत्, यो वा विषं खादति जीवि-
तार्थी-जीवितुकामः एषोपमा-अपायप्राप्तिं प्रति एतदुपमानं, आशातनया कृतया गुरूणां सम्बन्धिन्या, तद्वदपायो
भवतीति ॥ ४०४ ॥ अत्र विशेषमाह-सिया हुत्ति, स्यात्-कदाचिन्मन्त्रादिप्रतिबन्धाद् असौ पावकः-अग्निः न
दहेत्-न भस्मसात्कुर्यात्, आशीविषो वा भुजङ्गो-वा कुपितो वा न भक्षयेत्-न खादयेत्, तथा स्यात्-कदाचि-
न्मन्त्रादिप्रतिबन्धादेव विषं हालाहलं-अतिरौद्रं न मारयेत्-न प्राणांस्त्याजयेत्, एवमेतत् कदाचिद्भवति, न चापि
मोक्षो गुरुहीलनया-गुरोराशातनया कृतया भवतीति ॥ ४०५ ॥ जो पव्वयंति, यः पर्वतं शिरसा-उत्तमाङ्गेन
भेत्तुमिच्छेत्, सुप्तं वा सिंहं गिरिगुहायां वा प्रतिबोधयेत्, यो वा ददाति शक्त्यग्रे प्रहरणविशेषाग्रे प्रहारं
हस्तेन, एषोपमाऽऽशातनया गुरूणामिति पूर्ववदिति ॥ ४०६ ॥ अत्र विशेषमाह-सिया हु त्ति, स्यात्-कदाचित्कश्चिद्वासु-
देवादिः प्रभावातिशयात्-शिरसा उत्तमाङ्गेन गिरिमपि-पर्वतमपि भिन्द्यात्, स्यान्मन्त्रादिसामर्थ्यात्सिंहः कुपितो

न भक्षयेत्, स्यादेवतानुग्रहादेनं भिन्द्याद्वा शक्त्यग्रे प्रहारे दत्तेऽपि, एवमेतत्कदाचिद्भवति, न चापि मोक्षो गुरुहीलनया-गुरोराशातनया भवतीति ॥ ४०७ ॥ एवं पावकाद्याशातना अपेक्षा गुर्वाशातना महतीत्यतिशयप्रदर्शनार्थमाह-आयरिअपि-आचार्यपादाः पुनरप्रसन्ना इत्यादि पूर्वार्द्धे पूर्ववत्। यस्मादेवं तस्मादनाबाधसुखाभिकाङ्क्षी-मोक्षसुखाभिलाषी साधुर्गुरुप्रसादाभिमुखः-आचार्यादिप्रसादे उद्युक्तः सन् रमेत-वर्त्तेतेति ॥ ४०८ ॥

जहाऽऽहिअग्गी जलणं नमंसे, नाणाहुईमंतपयाभिसित्तं ।
एवायरियं उवचिट्ठइज्जा, अणंतनाणोवगओ वि संतो ॥ ४०९ ॥
जस्संतिए धम्मपयाइं सिक्खे, तस्संतिए वेणइअं पउंजे ।
सक्कारए सिरसा पंजलीओ, कायग्गिरा भो मणसा अ निच्चं ॥ ४१० ॥
लज्जा दया संजम बंभचेरं, कल्लाणभागिस्स विसोहिठाणं ।
जे मे गुरू सययमणुसासयंति, तेऽहं गुरू सययं पूजयामि ॥ ४११ ॥
जहा निसंते तवणच्चिमाली, पभासई केवल भारहं तु ।
एवायरिओ सुयसीलबुद्धिए, विरायई सुरमज्झे व इंदो ॥ ४१२ ॥

जहा ससी कोमुइजोगजुत्तो, नक्खत्ततारागणपरिवुडप्पा ।
खे सोहई विमले अब्भमुक्के, एवं गणी सोहइ भिक्खुमज्झे ॥ ४१३ ॥
महागरा आयरिया महेसी, समाहिजोगेसुयसीलबुद्धिए ।
संपाविउकामे अणुत्तराइं, आराहए तोसइ धम्मकामी ॥ ४१४ ॥
सुच्चाण मेहावी सुभासियाइं, सुस्सूसए आयरियऽप्पमत्तो ।
आराहइत्ताण गुणे अणेगे, से पावई सिद्धिमणुत्तरं ॥ ४१५ ॥ ति बेमि ॥

इइ विणयसमाहीए पढमो उद्देसो समत्तो ९—१ ॥

केन प्रकारेणेत्याह—जहाऽऽहिअग्गित्ति—यथाऽऽहिताग्निः—कृतावसथादिर्ब्राह्मणो ज्वलनं—अग्निं नमस्यति, किंविशिष्टमित्याह—नानाहुतिमन्त्रपदाभिषिक्तमाहुतयो—घृतप्रक्षेपादिलक्षणा मन्त्रपदानि—अग्नये स्वाहा इत्येवमादीनि तैरभिषिक्तं—दीक्षासंस्कृतमित्यर्थः, एवं—अग्निमिवाचार्यमुपतिष्ठेत्—विनयेन सेवेत, किंविशिष्ट इत्याह—अनन्तज्ञानोपगतोऽपीति—अनन्तं स्वपरपर्यायापेक्षया वस्तु ज्ञायते येन तदनन्तज्ञानं तदुपगतोऽपि सन्, किमङ्ग पुनरन्य इति ॥ ४०९ ॥ एतदेव स्पष्टयति—जस्सत्ति, यस्यान्तिके—यस्य समीपे धर्मपदानि—धर्मफलानि सिद्धान्तपदानि शिक्षेत—आदद्यात् तस्यान्तिके—

तत्समीपे,।रिमित्याह–वैनयिकं प्रयुञ्जीत–विनय एव वैनयिकं तत्कुर्यादितिभावः, कथमित्याह–सत्कारयेदभ्युत्थानादिना पूर्वोक्तेन युक्तः शिरसा–उत्तमाङ्गेन प्राञ्जलिः–प्रोद्गताञ्जलिः सन् कायेन–देहेन गिरा–वाचा मस्तकेन वन्दे इत्यादिरूपया मो इति शिष्यामन्त्रण मनसा च–भावप्रतिबन्धरूपेण नित्यं–सदैव सत्कारयेत्, न तु सूत्रग्रहणकाल एव, कुशलानुबन्धव्यवच्छेदप्रसङ्गादिति ॥ ४१० ॥ एव च मनसि कुर्यादित्याह–लज्जा दयेत्ति, लज्जा–अपवादभयरूपा दया–अनुकम्पा सयमः–पृथिव्यादिजीवविषयः, ब्रह्मचर्यं–विशुद्धतपोऽनुष्ठानं, एतच्चआदि विपक्षव्यावृत्त्या कुशलपक्षप्रवर्तकत्वेन कल्याणभागिनो–मोक्षभागिनो जीवस्य विशोधिस्थानं–कर्ममलापनयनस्थानं वर्त्तते, अनेन ये मां गुरव–आचार्याः सततं–अनवरत अनुशासयन्ति–कल्याणयोग्यतां नयन्ति, तानहमेवभूतान् गुरून् सततं पूजयामि, न,तेभ्योऽन्यः पूजार्ह इति ॥ ४११ ॥ इतश्चैते पूज्या इत्याह–जहत्ति, यथा निशान्ते–रात्र्यवसाने दिवस इत्यर्थः, तपन्नर्चिर्माली–सूर्यः प्रभासयति–उद्योतयति केवलं–सम्पूर्णं भारतं–भरतक्षेत्रं तुशब्दादन्यच्च क्रमेण, एवमर्चिर्मालीवाचार्यः श्रुतेन–आगमेन, शीलेन–परद्रोहविरतिरूपेण बुद्ध्या च–स्वाभाविकया युक्तः सन् प्रकाशयति जीवादिभावानिति। एवं च वर्तमानः सुसाधुभिः परिवृतो विराजते सुरमध्य इव–सामानिकादिमध्यगत इव इन्द्र इति ॥ ४१२ ॥ जहचि, यथा शशी–चन्द्रः, कौमुदीयोगयुक्तः–कार्त्तिकपौर्णिमास्यामुदित इत्यर्थः, स एव विशेष्यते–नक्षत्रतारागणपरिवृतात्मा–नक्षत्रादिभिर्युक्त इति भावः, खे–आकाशे शोभते, किंविशिष्टे खे?, विमले अभ्रमुक्ते–अभ्रमुक्तमेवात्यन्तं विमल भवतीति ख्यापनार्थमेतत्, एवं चन्द्र इव गणी–आचार्यः, शोभते भिक्षुमध्ये–साधुमध्ये, अतोऽयं महत्त्वात्पूज्य इति ॥ ४१३ ॥ किंच–महागरा

आयरिएत्ति, महाकरा ज्ञानादिभावरत्नापेक्षया आचार्या महैषिणो–मोक्षैषिणः, कथं महैषिण इत्याह–समाधियोग-श्रुतशीलबुद्धिभिः समाधियोगैः–ध्यानविशेषैः श्रुतेन–द्वादशाङ्गाभ्यासेन शीलेन–परद्रोहविरतिरूपेण बुद्ध्या च औत्पत्तिक्यादिरूपया, अन्ये तु व्याचक्षते–समाधियोगश्रुतशीलबुद्धीनां महाकरा इति। तानेवंभूतानाचार्यान् संप्राप्तुकामो-ऽनुत्तराणि ज्ञानादीन्याराधयेद्विनयकरणेन, न सकृदेव, अपि तु तोपयेत्–असकृत्करणेन तोषं ग्राहयेत् धर्मकामो-निर्जरार्थी, न तु ज्ञानादिफलापेक्षयेति ॥ ४१४॥ सोच्चाणंति, श्रुत्वा मेधावी सुभाषितानि–गुर्वाराधनफलाभिधायीनि, किमित्याह–सुश्रूषयेत्सदाऽऽचार्यानप्रमत्तो–निद्रादिविरहितस्तदाज्ञां कुर्वीतेत्यर्थः, य एवं गुरुसुश्रूपापरः स आराध्य गुणाननेकान् ज्ञानादीन् प्राप्नोति सिद्धिमनुत्तरां, मुक्तिमित्यर्थः, अनन्तरं सुकुलादिपरम्परया वा॥४१५॥ ब्रवीमीति पूर्ववत्॥

इति विनयसमाधावुक्तः प्रथम उद्देशकः ९–१ ॥

विनयाधिकारवानेव द्वितीय उच्यते, तत्रेदमादिसूत्रं—

मूलाउ खंधप्पभवो दुमस्स, खंधाउ पच्छा समुविंति साहा ।
साहप्पसाहा विरुहंति पत्ता, तओ सि पुप्फं च फलं रसो य ॥ ४१६ ॥
एवं धम्मस्स विणओ, मूलं परमो से मुक्खो । जेण किर्त्ति सुयं सिग्घं, नीसेसं चाभिगच्छइ॥४१७॥

मूलाउ इति, मूलादादिप्रबन्धात् स्कन्धप्रभवः–स्थुडोत्पादः, कस्येत्याह–द्रुमस्य–वृक्षस्य, ततः–स्कन्धात्सका-

तत्समीपे, किमित्याह–वैनयिकं प्रयुञ्जीत–विनय एव वैनयिकं तत्कुर्यादितिभावः, कथमित्याह–सत्कारभेदभ्युत्थानादिना पूर्वोक्तेन युक्तः शिरसा–उत्तमाङ्गेन प्राञ्जलिः–प्रोद्गताञ्जलिः सन् कायेन–देहेन गिरा–वाचा मस्तकेन वन्दे इत्यादिरूपया भो इति शिष्यामन्त्रणं मनसा च–भावप्रतिबन्धरूपेण नित्यं–सदैव सत्कारयेत्, न तु सूत्रग्रहणकाल एव, कुशलानुबन्ध-व्यवच्छेदप्रसङ्गादिति ॥ ४१० ॥ एवं च मनसि कुर्यादित्याह–लज्जा दयेत्ति, लज्जा–अपवादभयरूपा दया–अनुकम्पा संयमः–पृथिव्यादिजीवविषयः, ब्रह्मचर्यं–विशुद्धतपोऽनुष्ठानं, एतल्लज्जादि विपक्षव्यावृत्त्या कुशलपक्षप्रवर्तकत्वेन कल्याण-भागिनो–मोक्षभागिनो जीवस्य विशोधिस्थानं–कर्ममलापनयनस्थानं वर्तते, अनेन ये मां गुरव–आचार्याः सततं–अनवरतं अनुशासयन्ति–कल्याणयोग्यतां नयन्ति, तानहमेवंभूतान् गुरून् सततं पूजयामि, न तेभ्योऽन्यः पूजार्ह इति ॥ ४११ ॥ इतश्चैते पूज्या इत्याह–जहत्ति, यथा निशान्ते–रात्र्यवसाने दिवस इत्यर्थः, तपन्नर्चिर्माली–सूर्यः प्रभास-यति–उद्योतयति केवलं–सम्पूर्णं भारतं–भरतक्षेत्रं तुशब्दादन्यच्च क्रमेण, एवमर्चिर्मालीवाचार्यः श्रुतेन–आगमेन, शीलेन–परद्रोहविरतिरूपेण बुद्ध्या च–स्वाभाविक्या युक्तः सन् प्रकाशयति जीवादिभावानिति। एवं च वर्तमानः सुसाधु-भिः परिवृतो विराजते सुरमध्य इव–सामानिकादिमध्यगत इव इन्द्र इति ॥ ४१२ ॥ जहचि, यथा शशी–चन्द्रः, कौमुदीयोगयुक्तः–कार्त्तिकपौर्णिमास्यामुदित इत्यर्थः, स एव विशेष्यते–नक्षत्रतारागणपरिवृतात्मा–नक्षत्रादिभिर्युक्त इति भावः, खे–आकाशे शोभते, किंविशिष्टे खे?, विमले अभ्रमुक्ते–अभ्रमुक्तमेवात्यन्तं विमलं भवतीति ख्यापनार्थमेतत्, एवं चन्द्र इव गणी–आचार्यः शोभते भिक्षुमध्ये–साधुमध्ये, अतोऽयं महत्त्वात्पूज्य इति ॥ ४१३ ॥ किंच–महाकरा

आयरिएत्ति, महाकरा ज्ञानादिभावरत्नापेक्षया आचार्या महैषिणो-मोक्षैषिणः, कथं महैषिण इत्याह-समाधियोग-श्रुतशीलबुद्धिभिः समाधियोगैः-ध्यानविशेषैः श्रुतेन-द्वादशाङ्गाभ्यासेन शीलेन-परद्रोहविरतिरूपेण बुद्ध्या च औत्पत्तिक्यादिरूपया, अन्ये तु व्याचक्षते-समाधियोगश्रुतशीलबुद्धीनां महाकरा इति। तानेवंभूतानाचार्यान् संप्राप्तुकामो-ऽनुत्तराणि ज्ञानादीन्याराधयेद्विनयकरणेन, न सकृदेव, अपि तु तोषयेत्-असकृत्करणेन तोषं ग्राहयेत् धर्मकामो-निर्जरार्थी, न तु ज्ञानादिफलापेक्षयेति ॥ ४१४॥ सोच्चाणंति, श्रुत्वा मेधावी सुभाषितानि-गुर्वाराधनफलाभिधायीनि, किमित्याह-सुश्रूषयेत्सदाऽऽचार्यानप्रमत्तो-निद्रादिविरहितस्तदाज्ञां कुर्वीतेत्यर्थः, य एवं गुरुसुश्रूषापरः स आराध्य गुणाननेकान् ज्ञानादीन् प्राप्नोति सिद्धिमनुत्तरां, मुक्तिमित्यर्थः, अनन्तरं सुकुलादिपरम्परया वा ॥४१५॥ ब्रवीमीति पूर्ववत्॥

इति विनयसमाधावुक्तः प्रथम उद्देशकः ९-१ ॥

विनयाधिकारवानेव द्वितीय उच्यते, तत्रेदमादिसूत्रं—

मूलाउ खंधप्पभवो दुमस्स, खंधाउ पच्छा समुविंति साहा ।
साहप्पसाहा विरुहंति पत्ता, तओ सि पुप्फं च फलं रसो य ॥ ४१६ ॥
एवं धम्मस्स विणओ, मूलं परमो से मुक्खो । जेण कित्तिं सुयं सिग्घं, नीसेसं चाभिगच्छइ॥४१७॥

मूलाउ इति, मूलादादिप्रबन्धात् स्कन्धप्रभवः-स्थुडोत्पादः, कस्येत्याह-द्रुमस्य-वृक्षस्य, ततः-स्कन्धात्सका-

तत्समीपे, किमित्याह–वैनयिकं प्रयुञ्जीत–विनय एव वैनयिकं तत्कुर्यादिति भावः, कथमित्याह–सत्कारभेदभ्युत्थानादिना पूर्वोक्तेन युक्तः शिरसा–उत्तमाङ्गेन प्राञ्जलिः–प्रोद्गताञ्जलिः सन् कायेन–देहेन गिरा–वाचा मस्तकेन वन्दे इत्यादिरूपया भो इति शिष्यामन्त्रणं मनसा च–भावप्रतिबन्धरूपेण नित्यं–सदैव सत्कारयेत्, न तु सूत्रग्रहणकाल एव, अकुशलानुबन्धव्यवच्छेदप्रसङ्गादिति ॥ ४१० ॥ एवं च मनसि कुर्यादित्याह–लज्जा दयेत्ति, लज्जा–अपवादभयरूपा, दया–अनुकम्पा संयमः–पृथिव्यादिजीवविषयः, ब्रह्मचर्यं–विशुद्धतपोऽनुष्ठानं, एतल्लज्जादि विपक्षव्यावृत्त्या कुशलपक्षप्रवर्तकत्वेन कल्याणभागिनो–मोक्षभागिनो जीवस्य विशोधिस्थानं–कर्ममलापनयनस्थानं वर्तते, अनेन ये मां गुरव–आचार्याः सततं–अनवरतं अनुशासयन्ति–कल्याणयोग्यतां नयन्ति, तानहमेवंभूतान् गुरून् सततं पूजयामि, न तेभ्योऽन्यः पूजार्ह इति ॥ ४११ ॥ इत्थमेते पूज्या इत्याह–जहत्ति, यथा निशान्ते–रात्र्यवसाने दिवस इत्यर्थः, तपन्नर्चिर्माली–सूर्यः प्रभासयति–उद्योतयति केवलं–सम्पूर्णं भारतं–भरतक्षेत्रं तुशब्दादन्यच्च क्रमेण, एवमर्चिर्मालीवाचार्यः श्रुतेन–आगमेन, शीलेन–परद्रोहविरतिरूपेण बुद्ध्या च–स्वाभाविक्या युक्तः सन् प्रकाशयति जीवादिभावानिति। एवं च वर्तमानः सुसाधुभिः परिवृतो विराजते सुरमध्य इव–सामानिकादिमध्यगत इव इन्द्र इति ॥ ४१२ ॥ जहत्ति, यथा शशी–चन्द्रः, कौमुदीयोगयुक्तः–कार्त्तिकपौर्णिमास्यामुदित इत्यर्थः, स एव विशेष्यते–नक्षत्रतारागणपरिवृतात्मा–नक्षत्रादिभिर्युक्त इति भावः, खे–आकाशे शोभते, किंविशिष्टे खे?, विमले अभ्रमुक्ते–अभ्रमुक्तमेवात्यन्तं विमलं भवतीति ख्यापनार्थमेतत्, एवं चन्द्र इव गणी–आचार्यः शोभते भिक्षुमध्ये–साधुमध्ये, अतोऽयं महत्वात्पूज्य इति ॥ ४१३ ॥ किंच–महागरा

भणनादिलक्षणेनापि अपिशब्दस्य व्यवहितः सम्बन्धः, चोदित उक्तः, कुप्यति-रुष्यति नरः। अत्र निदर्शनमाह-दिव्यां-अमानुषीं, असौ-नरः श्रियं-लक्ष्मीं आगच्छन्तीं-आत्मनो भवन्तीं दण्डेन-काष्ठमयेन प्रतिषेधयति-निवारयति। एतदुक्तं भवति-विनयः संपदो निमित्तं, तत्र स्खलितं यदि कश्चिच्चोदयति स गुणः तत्रापि रोपकरणेन वस्तुतः संपदो निषेधः। उदाहरणं चात्र दशारादयः कुरूपागतश्रीप्रार्थनाप्रणयभङ्गकारिणस्तद्रहितास्तदभङ्गकारी च तद्युक्तः कृष्ण इति ॥ ४१९ ॥

तहेव अविणीयप्पा, उववज्झा हया गया। दीसंति दुहमेहंता, आभिओगमुवट्ठिया ॥ ४२० ॥

तहेव सुविणीयप्पा, उववज्झा हया गया। दीसंति सुहमेहंता, इड्ढिं पत्ता महायसा ॥ ४२१ ॥

अविनयदोषोपदर्शनार्थमेवाह-तहेवत्ति, तथैवेति-तथैवैते अविनीतात्मानो-विनयरहिता अनात्मज्ञाः, उपवाह्यानां-राजादिवल्लभानामेते कर्मकरा इत्यौपवाह्याः, हयाः-अश्वाः, गजाः-हस्तिनः, उपलक्षणमेतन्महिषकादीनामिति। एते किमित्याह-दृश्यन्ते-उपलभ्यन्ते, एव मन्दुरादौ अविनयदोषेणोभयलोकवर्त्तिना यवसादिवोढारः, दुःखं-संक्लेशलक्षणं एधमाना-अनेकार्थत्वादनुभवन्त आभियोग्यं-कर्म्मकरभावं उपस्थिताः-प्राप्ता इति ॥ ४२० ॥ एतेष्वेव विनयगुणमाह-तहेवत्ति, तथैव एते सुविनीतात्मानो-विनयवन्त आत्मज्ञा औपवाह्या-राजादीनां हया गजा इति पूर्ववत्। एते किमित्याह-दृश्यन्ते-उपलभ्यन्ते, एव सुखं-आह्लादलक्षणं, एधमाना-अनुभवन्तः ऋद्धिं प्राप्ता इति विशिष्टभूषणालयभोजनादिभावतः प्राप्तर्द्धयो महायशसो-विख्यातसद्गुणा इति ॥ ४२१ ॥

खात् पश्चात्–तदनु समुपयान्ति–आत्मानं प्राप्नुवन्त्युत्पद्यन्त इत्यर्थः, कास्ता इत्याह–शाखास्तद्भुजाकल्पाः, तथा शाखाभ्यः–उक्तलक्षणाभ्यः प्रशाखास्तदंशभूता विरोहन्ति–जायन्ते, तथा ताभ्योऽपि पत्राणि–पर्णानि विरोहन्ति। ततस्तदनन्तरं से–तस्य द्रुमस्य पुष्पं फलं च रसश्च फलगत एवैते क्रमेण भवन्तीति ॥ ४१६ ॥ एवं दृष्टान्तमभिधाय दार्ष्टान्तिकयोजनामाह–एवंति, एवं–द्रुममूलवत्, धर्मस्य–परमकल्पवृक्षस्य विनयो मूलं–आदिप्रबन्धरूपं परम इत्युभो रसः से–तस्य फलरसवन्मोक्षः, स्कन्धादिकल्पानि तु देवलोकगमनसुकुलागमनादीनि, अतो विनयः कर्त्तव्यः, किंविशिष्ट इत्याह–येन–विनयेन कीर्तिं–सर्वत्र शुभप्रवादरूपां, तथा श्रुतं–अङ्गप्रविष्टादि श्लाघ्यं–प्रशंसास्पदीभूतं निःशेषं–संपूर्णं चाधिगच्छति–प्राप्नोतीति ॥ ४१७ ॥

जे य चण्डे मिए थद्धे, दुव्वाई नियडी सढे। वुज्झइ से अविणीअप्पा, कट्ठं सोयगयं जहा ॥४१८॥
विणयंपि जो उवाएणं, चोइओ कुप्पई नरो। दिव्वं सो सिरिमिज्जंतिं, दंडेण पडिसेहए ॥ ४१९ ॥

अविनयवतो दोषमाह–जे य ति, यश्च चण्डो–रोषणः मृगः–अज्ञो हितमप्युक्तो रुष्यति, तथा स्तब्धो–जात्यादिमदोन्मत्तो दुर्वादी–अप्रियवक्ता निकृतिमान्–मायोपेतः, शठः–संयमयोगेष्वनादृतः, एतेभ्यो दोषेभ्यो विनयं न करोति य उह्यते असौ पापः संसारस्रोतसा अविनीतात्मा–सकलकल्याणैकनिबन्धनविनयरहितः, किमिवेत्याह–काष्ठं स्रोतोगतं–नद्यादिवहनीपतितं यथा तद्वदिति ॥ ४१८ ॥ किं च विणयंपीति, विनयमुक्तलक्षणं च उपायेनापि–एकान्तमृदु-

तहेव सुविणीयप्पा, देवा जक्खा य गुज्झगा। दीसंति सुहमेहंता, इड्ढिं पत्ता महायसा ॥ ४२६ ॥

एतदेव विनयाविनयफलं देवानधिकृत्याह–तहेवत्ति, तथैव यथा नरनार्यः अविनीतात्मानो भवान्तरेऽकृतविनया
देवा–वैमानिका ज्योतिष्का यक्षाश्च–व्यन्तराश्च गुह्यका–भवनवासिनः, त एते दृश्यन्ते आगमभावचक्षुषा दुःखमेध-
मानाः–पराज्ञाकरणपरर्द्धिदर्शनादिना, आभियोग्यमुपस्थिताः–अभियोग–आज्ञाप्रदानलक्षणोऽस्यास्तीति अभियोगी तद्भाव
आभियोग्यं, कर्मकरभावमित्यर्थः, उपस्थिताः–प्राप्ता इति ॥ ४२५ ॥ विनयफलमाह–तहेवत्ति, तथैवेति पूर्ववत्, सुविनी-
तात्मानो–जन्मान्तरकृतविनया निरतिचारधर्माराधका इत्यर्थः, देवा यक्षाश्च गुह्यका इति पूर्ववदेव, दृश्यन्ते सुखमेध-
माना अर्हत्कल्याणकादिषु ऋद्धिं प्राप्ता इति देवाधिपादिप्राप्तर्द्धयो महायशसो–विख्यातसद्गुणा इति ॥ ४२६ ॥

जे आयरियउवज्झायाणं, सुस्सूसावयणंकरा। तेसिं सिक्खा पवड्ढंति, जलसित्ता इव पायवा ॥४२७॥

अप्पणट्ठा परट्ठा वा, सिप्पा नेउणियाणि य। गिहिणो उवभोगट्ठा, इहलोगस्स कारणा ॥४२८॥

जेण बन्धं वहं घोरं, परियावं च दारुणं। सिक्खमाणा नियच्छंति, जुत्ता ते ललिइंदिया ॥ ४२९ ॥

तेवि तं गुरुं पूयंति, तस्स सिप्पस्स कारणा। सक्कारेंति नमंसंति, तुट्ठा निद्देसवत्तिणो ॥ ४३० ॥

किं पुणो जे सुयग्गाही, अणंतहियकामए। आयरिया जं वए भिक्खू, तम्हा तं नाइवत्तए ॥ ४३१ ॥

तहेव अविणीयप्पा, लोगंमि नरनारिओ । दीसंति दुहमेहंता, छाया विगलितेंदिया ॥ ४२२ ॥
दंडसत्थापरिज्जुण्णा, असब्भवयणेहि य । कलुणाविवन्नच्छंदा, खुप्पिवासाइपरिगया ॥ ४२३ ॥
तहेव सुविणीयप्पा, लोगंसि नरनारिओ । दीसंति सुहमेहंता, इड्ढिं पत्ता महायसा ॥ ४२४ ॥

एतदेव विनयाविनयफलं मनुष्यानधिकृत्याह-तहेवत्ति, तथैव तिर्यञ्च इव अविनीतात्मान इति पूर्ववत् । लोकेऽस्मिन्-मनुष्यलोके, नरनार्य इति प्रकटार्थं दृश्यन्ते दुःखमेधमाना इति पूर्ववत्, छाया(ताः)-कसघातव्रणाङ्कितशरीराः, विगलितेन्द्रियाः-अपनीतनासिकादीन्द्रियाः पारदारिकादय इति ॥ ४२२ ॥ तथा दंडत्ति, दण्डा-वेत्रदण्डादयः शस्त्राणि-खड्गादीनि ताभ्यां परिजीर्णाः-समन्ततो दुर्बलभावमापादिताः, तथा असभ्यवचनैश्च-खरकर्कशादिभिः परिजीर्णाः, च एवंभूताः सन्तः सतां करुणाहेतुत्वात् करुणा-दीना व्यापन्नाच्छन्दसः-परायत्ततया अपेतस्वाभिप्रायाः, क्षुधा-बुभुक्षया पिपासया-तृषा परिगता-व्याप्ता अन्नादिनिरोधस्तोकदानाभ्यामिति । एवं इह लोके प्राक्तनोपात्तकर्मानुभावत एवंभूताः परलोके तु कुशलाप्रवृत्तेः दुःखिततरा विज्ञायन्त इति ॥ ४२३ ॥ विनयफलमाह-तहेवत्ति, तथैव विनीततिर्यञ्च इव सुविनीतात्मानो लोकेऽस्मिन्नरनार्य इति पूर्ववत् । दृश्यन्ते सुखमेधमानाः ऋद्धिं प्राप्ता महायशस इति पूर्ववत्, नवरं स्वाराधितनृपगुरुजना उभयलोकसाफल्यकारिण एत इति ॥ ४२४ ॥

तहेव अविणीयप्पा, देवा जक्खा य गुज्झगा । दीसंति दुहमेहंता, आभिओगमुवट्ठिया ॥ ४२५ ॥

तथाऽनेकप्रकारं भिक्षुः-साधुः तस्मात्तदाचार्यवचनं नातिवर्त्तयत् युक्तत्वात्सर्वमेव सम्पादयेदिति ॥ ४३१ ॥

नीयं सेज्जं गइं ठाणं, नीयं च आसणाणि य। नीयं च पाए वंदेज्जा, नीयं कुज्जा य अंजलिं ॥४३२॥
संघट्टइत्ता काएणं, तहा उवहिणामवि। खमेह अवराहं मे, वएज्ज न पुणोत्ति य ॥ ४३३ ॥
दुग्गओ वा पओएणं, चोइओ वहई रहं। एवं दुबुद्धि किच्चाणं, वुत्तो वुत्तो पकुवई ॥ ४३४ ॥
कालं छंदोवयारं च, पडिलेहित्ता ण हेउहिं। तेण तेण उवाएणं, तं तं संपडिवायए ॥ ४३५ ॥

विनयोपायमाह-नीयंति, नीचां शय्यां-संस्तारकलक्षणामाचार्यशय्यायाः सकाशात् कुर्यादितियोगः, एवं नीचां गतिमाचार्यगतेस्तत्पृष्ठतो नातिदूरेण नातिद्रुतं यायादित्यर्थः, एवं नीचं स्थानमाचार्यस्थानाद्यत्राचार्य आस्ते, तस्मान्नीचतरे स्थाने स्थातव्यमितिभावः। तथा नीचानि-लघुतराणि कदाचित्कारणजाते आसनानि-पीठकानि तस्मिन्नुपविष्टे तदनुज्ञातः सेवेत, नान्यथा, तथा नीचं च-सम्यगवनतोत्तमाङ्गः सन् पादावाचार्यसत्कौ वन्देत, नावज्ञया तथा क्वचित्प्रश्नादौ नीचं-नम्रकायं कुर्याच्च सम्पादयेच्चाञ्जलिं, न तु स्थाणुवत्स्तब्ध एवेति ॥ ४३२ ॥ एवं कायविनयमभिधाय वाग्विनयमाह-संघट्ट-इत्ति, संघट्ट्य-स्पृष्ट्वा कायेन-देहेन कथञ्चित्तथाविधप्रदेशोपविष्टमाचार्यं तथोपधिनापि-कल्पादिना कथञ्चित्संघट्ट्य मिथ्यादुष्कृतपुरस्सरमभिवन्द्य क्षमस्व-सहस्वापराधं-दोषं मे मन्दभाग्यस्यैवं वदेत्-ब्रूयान्न पुनरिति न चाहमेनं भूयः करिष्यामीति ॥ ४३३ ॥ एतच्च सर्वं बुद्धिमान् स्वयमेव करोति, तदन्यस्तु कथमित्याह-दुग्गओवित्ति, दुर्गौरिव-

एवं नारकापोहेन व्यवहारतो येषु सुखदुःखसंभवस्तेषु विनयाविनयफलमुक्तं, अधुना विशेषतो लोकोत्तरविनयफलमाह–जे आयरियत्ति, ये आचार्योपाध्याययोः–प्रतीतयोः शुश्रूषावचनकराः–पूजाप्रधानवचनकरणशीलास्तेषां पुण्यभाजां शिक्षा–ग्रहणासेवनालक्षणा भावार्थरूपाः प्रवर्द्धन्ते–वृद्धिमुपयान्ति, दृष्टान्तमाह–जलसिक्ता इव पादपा–वृक्षा इति ॥ ४२७ ॥ एतच्च मनस्याधाय विनयः कार्य इत्याह–अप्पणट्ठत्ति, आत्मार्थं–आत्मनिमित्तं, अनेन मे जीविका भविष्यतीत्येवं, परार्थं वा–परनिमित्तं वा पुत्रमहमेतद्ग्राहयिष्यामीत्येवं, शिल्पानि–कुम्भकारक्रियादीनि नैपुण्यानि च–आलेख्यादिकलालक्षणानि गृहिणः–असंयताः, उपभोगार्थं–अन्नपानादिभोगाय, शिक्षन्त इति वाक्यशेषः, इहलोकस्य कारणं–इहलोकनिमित्तमिति ॥ ४२८ ॥ जे णं ति, येन–शिल्पादिना शिक्ष्यमाणेन बन्धं–निगडादिभिः वधं–कषादिभिर्घोरं–रौद्रं परितापं च, दारुणं–एतज्जनितमनिष्टं निर्भर्त्सनादिवचनजनितं च शिक्षमाणा गुरोः सकाशात् नियच्छन्ति–प्राप्नुवन्ति, युक्ता इति–नियुक्ताः शिल्पादिग्रहणे ते ललितेन्द्रिया–गर्भेश्वरा राजपुत्रादय इति ॥ ४२९ ॥ तेऽवि तमिति, तेऽपि इत्वर शिल्पादि शिक्षमाणास्तं गुरुं बन्धादिकारकमपि पूजयन्ति सामान्यतो मधुरवचनाभिनन्दनेन तस्य शिल्पस्येत्वरस्य कारणात्, तन्निमित्तत्वादिति भावः, तथा सत्कारयन्ति वस्त्रादिना, नमस्यन्ति अञ्जलिग्रहणादिना। तुष्टा इत्यमुत इदमवाप्यत इति हृष्टा निर्देशवर्तिनः–आज्ञाकारिण इति ॥ ४३० ॥ यदि तावदेतेऽपि तं गुरुं पूजयन्ति अतः–किं पुनन्ति, किं पुनः यः–साधुः श्रुतग्राही–परमपुरुषप्रणीतागमग्रहणाभिलाषी अनन्तहितकामुको मोक्षं यः कामयत इत्यभिप्रायस्तेन तु सुतरां गुरवः पूजनीया इति, यतस्तैरमाचार्या यद्वदन्ति किमपि

## विणयसमाहीए बीओ उद्देसओ समत्तो ९-२ ॥

किंच-विवत्तित्ति, विपत्तिरविनीतस्य ज्ञानादिगुणानां, संप्राप्तिर्विनीतस्य च ज्ञानादिगुणानामेव, यस्यैतत्-ज्ञानादिप्राप्त्यप्राप्तिद्वयं उभयत-उभयाभ्यां विनयाविनयाभ्यां सकाशाद्भवतीत्येवं ज्ञातं-उपादेयं चैतदिति भवति शिक्षां-ग्रहणासेवनारूपामसावित्थंभूतोऽभिगच्छति-प्राप्नोति, भावत उपादेयपरिज्ञानादिति ॥ ४३६ ॥ एतदेव दृढयन्नविनीत-फलमाह-जे यावित्ति, यश्चापि चण्डः प्रव्रजितोऽपि यो रोषणः मतिऋद्धिगौरव इति ऋद्धिगौरवमतिगौरवे अभिनिविष्टः पिशुनः-पृष्ठिमांसखादको नरो-नरव्यञ्जनो न भावनरः साहसिकः-अकृत्यकरणपरः हीनप्रेषणो-हीनगुर्वाज्ञापरः अदृष्टधर्म्मा-सम्यगनुपलब्धश्रुतादिधर्मा विनयेऽकोविदो-विनयविषयेऽपण्डितः असंविभागी-यत्र क्वचन लाभे न संविभागवान्, य इत्थंभूतोऽधमो नैव तस्य मोक्षः, सम्यग्दृष्टेश्चारित्रवत इत्थंविधसंक्लेशाभावादिति ॥ ४३७ ॥ विनयफला-भिधानोपसंहरन्नाह-णिद्देसवत्तित्ति, निर्देशवर्त्तिनः-आज्ञावर्त्तिनः पुनर्ये गुरूणां-आचार्यादीनां श्रुतार्थधर्म्मा इति प्राकृतशैल्या श्रुतधर्मार्था गीतार्था इत्यर्थः, विनये कर्त्तव्ये कोविदा-विपश्चितः, य इत्थंभूतास्तीर्त्वा ते महासत्त्वा ओघमेनं-प्रत्यक्षोपलभ्यमानं संसारसमुद्रं दुरुत्तारं तीर्त्त्वेव तीर्त्वा, चरमभवं केवलित्वं च प्राप्येतिभावः, ततः क्षपयित्वा कर्म निरवशेषं भवोपग्राहिसंज्ञितं गतिमुत्तमां सिद्धाख्यां गताः-प्राप्ताः ॥४३८॥ इति ब्रवीमीति पूर्ववत् ।

विनयसमाधौ व्याख्यातो द्वितीय उद्देशकः ९-२ ॥

गलिबलीवर्दवत् प्रतोदेन-आरादण्डलक्षणेन चोदितो-विद्धः सन्वहति-नयति क्वापि रथं प्रतीतं, एव दृग्गीरिव दुर्बुद्धिः-अहितावहबुद्धिः शिष्यः कृत्यानां आचार्यादीनां कृत्यानि वा तदभिरुचितकार्याणि उक्त उक्तः-पुनः पुनरभिहित इत्यर्थः, प्रकरोति-निष्पादयति प्रयुङ्क्ते चेति ॥ ४३४ ॥ एवं च हवान्यप्यमूनि न शोभनान्यत आह-कालेति, कालं-शरदादिलक्षणं छन्दस्तदिच्छारूपं उपचारं-आराधनाप्रकार, चशब्दाद्देशादिपरिग्रहः, एतत्प्रत्युपेक्ष्य-ज्ञात्वा हेतुभिः-यथानुरूपैः कारणैः किमित्याह-तेन तेनोपायेन-गृहस्थावर्जनादिना तत्तत्पित्तहरादिरूपमशनादि सम्प्रतिपादयेत्, यथा कालेऽपि शरदादौ पित्तहरादिभोजनं प्रवातनिवातादिरूपा शय्या इच्छानुलोमं वा यदस्य हितं रोचते च आराधनाप्रकारोऽनुलोमं भाषणं ग्रन्थाभ्यासवैयावृत्त्यकरणादि देशे अनूपदेशाद्युचितं निष्ठीवनादिभिर्हेतुभिः श्लेष्माद्याभिरूपं विज्ञाय तदुचितं सम्पादयेदिति ॥ ४३५ ॥

विवत्ती अविणीयस्स, संपत्ती विणीयस्स य। जस्सेयं दुहओ नायं, सिक्खं से अभिगच्छइ ॥ ४३६ ॥

जे यावि चंडे मइइड्ढिगारवे, पिसुणे नरे साहसहीणपेसणे ।
अदिट्ठधम्मे विणए अकोविए, असंविभागी न हु तस्स मोक्खो ॥ ४३७ ॥
निद्देसवित्ती पुण जे गुरूणं, सुयत्थधम्मा विणयम्मि कोविया ।
तरित्तु ते ओहमिणं दुरुत्तरं, खवित्तु कम्मं गइमुत्तमं गय ॥ ४३८ ॥ त्तिबेमि ॥

मुहुत्तदुक्खा उ हवंति कंटया, अओमया तेऽवि तओ सुउद्धरा ।
वायादुरुत्ताणि दुरुद्धराणि, वेराणुबंधीणि महब्भयाणि ॥ ४४५ ॥

वायादुरुत्ताणि दुरुद्धराणि, वेराणुबंधीणि महब्भयाणि ॥ ४४५ ॥ इत्युपदर्शयन्नाह–आयरिएत्ति, आचार्यं–सूत्रार्थप्रदं तत्स्थानीयं
साम्प्रतं तृतीय आरभ्यते, इह च विनीतः पूज्य इत्युपदर्शयन्नाह–आयरिएत्ति, आचार्यं–सूत्रार्थप्रदं तत्स्थानीयं
वाऽन्यं ज्येष्ठार्यं, किमित्याह–अग्निमिव–तेजस्कायमिव आहिताग्निः–ब्राह्मणः सुश्रूषयन्–सम्यक् सेवमानः प्रतिजा-
गृयात्तत्कृत्यसम्पादनेनोपचरेत् । आह–यथाऽऽहिताग्निरित्यादिना प्रागिदमुक्तमेव, सत्यं, किं तु तदाचार्यमेवाङ्गीकृत्य
इदं तु रत्नाधिकमप्यधिकृत्योच्यते, वक्ष्यति च–"रायणिएसु विणयमि"त्यादि, प्रतिजागरणोपायमाह–अवलोकितं–निरी-
क्षितं इङ्गितमेव च–अन्यथावृत्तिलक्षणं ज्ञात्वा–विज्ञायाचार्यीयं यः–साधुः छन्दः—अभिप्रायमाराधयति । यथा शीते
पतति प्रावरणावलोकने तदानयने, इङ्गिते वा निष्ठीवनादिलक्षणे शुण्ठ्याद्यानयनेन स पूज्यः स इत्थंभूतः साधुः पूजार्हः–
कल्याणभागिति ॥ ४३९ ॥ प्रक्रान्ताधिकार एवाह–आयारेत्ति, आचारार्थं–ज्ञानाद्याचारनिमित्तं विनयमुक्तलक्षणं
प्रयुङ्क्ते–करोति यः सुश्रूषन्–श्रोतुमिच्छन्, किमयं वक्ष्यतीत्येवं, तदनु तेनोक्ते सति परिगृह्य वाक्यमाचार्यीयं,
ततश्च यथोपदिष्टं–यथोक्तमेवाभिकाङ्क्षन्, मायारहितः श्रद्धया कर्तुमिच्छन् सन् विनयं प्रयुङ्क्ते, अतोऽन्यथाकरणेन
गुरुं त्विति, आचार्यमेव नाशातयति–न हीलयति यः स पूज्य इति ॥ ४४० ॥ किंच–राइणिएत्ति, रत्नाधिकेषु–
ज्ञानादिभावरत्नाभ्यधिकेषु विनयं–यथोचितं प्रयुङ्क्ते करोति, तथा डहरा अपि च ये वयःश्रुताभ्यां पर्यायज्येष्ठाश्चिर-
प्रव्रजितास्तेषु विनयं प्रयुङ्क्ते, एवं नीचत्वे गुणाधिकान् प्रति नीचभावे वर्त्तते, सत्यवादी–अविरुद्धवक्ता तथा

आयरियं अग्गिमिवाहियग्गी, सुस्सूसमाणो पडिजागरिज्जा ।
आलोइयं इंगियमेव नच्चा, जो छंदमाराहयई स पुज्जो ॥ ४३९ ॥
आयारमट्ठा विणयं पउंजे, सुस्सूसमाणो परिगिज्झ वक्कं ।
जहोवइट्ठं अभिकंखमाणो, गुरुं तु नासाययई स पुज्जो ॥ ४४० ॥
रायणिएसु विणयं पउंजे, डहरावि य जे परियायजिट्ठा ।
नीयत्तणे वट्टइ सच्चवाई, उवायवं वक्ककरे स पुज्जो ॥ ४४१ ॥
अन्नायउंछं चरई विसुद्धं, जवणट्ठया समुयाणं च निच्चं ।
अलद्धुयं नो परिदेवइज्जा, लद्धुं न विकत्थई स पुज्जो ॥ ४४२ ॥
संथारसेज्जासणभत्तपाणे, अप्पिच्छया अइलाभेऽवि संते ।
जो एवमप्पाणभितोसइज्जा, संतोसपाहन्नरए स पुज्जो ॥ ४४३ ॥
सक्का सहेउं आसाइ कंटया, अओमया उच्छहया नरेणं ।
अणासए जो उ सहिज्ज कंटए, वईमए कण्णसरे स पुज्जो ॥ ४४४ ॥

क्रियते, वाग्दुरुक्तानि पुनर्दुरुद्धराणि-दुःखेनैवोद्ध्रियन्ते मनोलक्ष्यवेधनात्, वैरानुबन्धीनि-तथाश्रवणप्रद्वेषादिनेह परत्र च वैरमनुबध्नन्ति, अत एव महाभयानि, कुगतिपातादिभयहेतुत्वादिति ॥ ४४५ ॥

समावयंता वयणाभिधाया, कण्णंगया दुम्मणियं जणंति ।
धम्मोत्ति किच्चा परमग्गसूरे, जिइंदिए जो सहई स पुज्जो ॥ ४४६ ॥

अवण्णवायं च परम्मुहस्स, पच्चक्खओ पडिणीयं च भासं ।
ओहारिणिं अप्पियकारिणिं च, भासं न भासेज्ज सया स पुज्जो ॥ ४४७ ॥

अलोलुए अक्कुहए अमाई, अपिसुणे यावि अदीणवित्ती ।
नो भावए नोऽविय भावियप्पा, अकोउहल्ले य सया स पुज्जो ॥ ४४८ ॥

गुणेहि साहू अगुणेहिऽसाहू, गेण्हाहि साहू गुण मुंचऽसाहू ।
वियाणीया अप्पगमप्पएणं, जो रागदोसेहिं समो स पुज्जो ॥ ४४९ ॥

तहेव डहरं च महल्लगं वा, इत्थीं पुमं पव्वइयं गिहिं वा ।
नो हीलए नोऽवि य खिंसएज्जा, थंभं च कोहं च चए स पुज्जो ॥ ४५० ॥

अवपातवान्–वन्दनशीलो निकटवर्त्ती वा एवं च यो वाक्यकरो–गुरुनिर्देशकरणशीलः स पूज्य इति ॥ ४४१ ॥ किंच–अण्णायपत्ति, अज्ञातोञ्छं–परिचयाकरणेनाज्ञातः सन् भावोञ्छं गृहस्थोद्धरितादि चरत्यटित्वाऽऽनीतं भुङ्क्ते, न तु ज्ञातस्तद्बहुमतमिति, एतदपि विशुद्धं–उद्गमादिदोषरहितं, न तद्विपरीतं, एतदपि यापनार्थं–संयमभरोद्वाहिदेहपालनाय, नान्यथा समुदानं च–उचितभिक्षालब्धं च–नित्यं–सर्वकालं न तूञ्छमप्येकत्रैव बहुलब्धं कदाचित्कं वा, एवंभूतमपि विभागतः, अलब्ध्वा–अनासाद्य न परिदेवयेत्–न खेदं यायात्, यथा मन्दभाग्योऽहं अशोभनो वा अयं देश इत्येवं विभागतश्च लब्ध्वा प्राप्योचितं न विकत्थते–न श्लाघां करोति सपुण्योऽहं शोभनो वा अयं देश इत्येवं स पूज्य इति ॥ ४४२ ॥ किंच संथारेति, संस्तारकशय्यासनभक्तपानानि प्रतीतान्येतेष्वल्पेच्छता–अमूर्च्छया परिभोगः, अतिरिक्तपरिहरणं चातिलाभेऽपि सति संस्तारकादीनां गृहस्थेभ्यः सकाशात्, य एवमात्मानमभितोषयति येन वा तेन वा यापयति सन्तोषप्राधान्यरतः–सन्तोष एव प्राधान्यभावे रतः–सक्तः स पूज्य इति ॥ ४४३ ॥ इन्द्रियसमाधिद्वारेण पूज्यतामाह–सक्किति, शक्याः सोढुमाशयेतीदं मे भविष्यतीति प्रत्याशया, के इत्याह–कण्टका अयोमया–लोहात्मका उत्सहता नरेण–अर्थोद्यमिनेत्यर्थः १, तथा च कुर्वन्ति केचिदयोमयकण्टकास्तरणशयनमप्यर्थलिप्सवः, न पुनर्वा कण्टकाः शक्या इति, एवं व्यवस्थिते अनाशया–फलाप्रत्याशया निरीहः सन् यस्तु सहेत कण्टकान् वाङ्मयान्–खरादिवागात्मकान् कर्णसरान्–कर्णगामिनः स पूज्य इति ॥ ४४४ ॥ एतदेव स्पष्टयति–मुहुत्तेति, मुहूर्त्तदुःखा–अल्पकालदुःखा भवन्ति कण्टका अयोमयाः, वेधकाल एव प्रायो दुःखभावात्, तेऽपि ततः कायात्सूद्धराः–सुखेनैवोद्ध्रियन्ते व्रणपरिकर्म च

अवधारिणीं-अशोभन एवायमित्यादिरूपां, अप्रीतिकारिणीं च-श्रोतुर्मृतनिवेदनादिरूपां भाषां-वाचं न भाषेत सदा यः कदाचिदपि नैव ब्रूयात्स पूज्य इति ॥ ४४७ ॥ तथा-अलोलुएत्ति, अलोलुपः-आहारादिषु अलुब्धः, अकुहक-इन्द्रजालादिकुहकरहितः, अमायी-कौटिल्यशून्यः, अपिशुनश्चापि-न छेदभेदकर्त्ता अदीनवृत्तिः-आहाराद्यलाभेऽपि शुद्धवृत्तिर्नो भावयेदकुशलभावनया परं, यथा—अमुकपुरतो भवताऽहं वर्णनीयः, नापि च भावितात्मा स्वयमन्यपुरतः स्वगुणवर्णनापरः अकौतुकश्च सदा नटनर्त्तकादिषु यः स पूज्य इति ॥ ४४८ ॥ किंच-गुणेहिंत्ति, गुणैरनन्तरोदितैर्विनयादिभिर्युक्तः साधुर्भवति, तथा अगुणैरुक्तगुणविपरीतैरसाधुः, एवं सति "गृहाण साधुगुणान् मुञ्चासाधुगुणांश्चे"ति शोभन उपदेशः, एवमधिकृत्य प्राकृतशैल्या विज्ञापयति-विविधं ज्ञापयत्यात्मानमात्मना यस्तथा रागद्वेषयोः समो न रागवान्न द्वेषवानिति स पूज्य इति ॥ ४४९ ॥ किंच-तहेवेति, तथैवेति पूर्ववत् डहरं वा महल्लकं वा, वाशब्दान्मध्यमं वा, स्त्रियं पुमांसमुपलक्षणत्वान्नपुंसकं वा प्रव्रजितं गृहिणं वा, वाशब्दात्तदन्यतीर्थिकं वा, न हीलयति, नापि खिंसयति, तत्र सूयया असूयया वा, सकृद्दुष्टाभिधानं हीलनं, तदेवासकृत् खिंसनमिति, हीलनखिंसनयोश्च निमित्तभूतं स्तम्भं च मानं च क्रोधं च रोषं च त्यजति यः स पूज्यः, निदानत्यागेन तत्त्वतः कार्यत्यागादिति॥ ४५० ॥ जे माणिएत्ति, ये मानिता अभ्युत्थानादिसत्कारैः सततं-अनवरतं शिष्यान् मानयन्ति श्रुतोपदेशं प्रति चोदनादिभिः, तथा यत्नेन कन्यामिव निवेशयन्ति, यथा "मातापितरौ कन्यां गुणैर्वयसा च संवर्ध्य योग्यभर्त्तरि स्थापयन्ति", एवमाचार्याः शिष्यं सूत्रार्थवेदिनं दृष्ट्वा महत्याचार्यपदेऽपि स्थापयन्ति, तानेवंभूतान् गुरून्मानयति, योऽभ्युत्थानादिना

जे माणिया सययं माणयंति, जत्तेण कन्नं च निवेसयंति ।
ते माणए माणरिहे तवस्सी, जिइंदिए सच्चरए स पुज्जो ॥ ४५१ ॥
तेसिं गुरूणं गुणसागराणं, सोच्चाण मेहावि सुभासियाइं ।
चरे मुणी पंचरए तिगुत्तो, चउक्कसायावगए स पुज्जो ॥ ४५२ ॥
गुरुमिह सययं पडियरिय मुणी, जिणव(म)यनिउणे अभिगमकुसले ।
धुणिय रयमलं पुरेकडं, भासुरमउलं गइं वइ ॥ ४५३ ॥ त्ति बेमि ॥

विणयसमाहीए तइओ उद्देसो समत्तो ९-३ ॥

किं च-समावयंते'ति समापतन्त-एकीभावेनाभिमुखं पतन्तः, क इत्याह-वचनाभिघाताः-खरादिवचनप्रहाराः कर्णगताः सन्तः प्रायोऽनादिभवाभ्यासाद्दौर्मनस्यं-दुष्टमनोभावं जनयन्ति प्राणिनां, एवंभूतान् वचनाभिघातान् धर्म इतिकृत्वा सामायिकपरिणामापन्नो, न त्वशक्त्यादिना, परमाग्रशूरः-दानसंग्रामशूरापेक्षया प्रधानः शूरः जितेन्द्रियः सन् यः सहते न तु दौर्विकारं उपदर्शयति स पूज्य इति ॥ ४४६ ॥ तथा अवण्णत्ति, अवर्णवादं-अश्लाघावादं च पराङ्मुखस्य पृष्ठत इत्यर्थः, प्रत्यक्षतश्च-प्रत्यक्षस्य च प्रत्यनीकां अपकारिणीं चौरस्त्वमित्यादिरूपां भाषां तथा

खलु ते थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिट्ठाणा पन्नत्ता, तंजहा–विणयसमाही, सुयसमाही,
तवसमाही, आयारसमाही । सू० १६ ।–विणए सुए य तवे, आयारे निच्चपंडिया । अभिरामयंति
अप्पाणं, जे भवंति जिइंदिया ॥ ४५४ ॥

अथ चतुर्थ उच्यते, तत्र सामान्योक्तविनयविशेषोपदर्शनार्थमिदमाह–सुयं मे इति, श्रुतं मया आयुष्मन् ! तेन
भगवता एवमाख्यातमित्येतद् यथा षड्जीवनिकायां ( पृ. २० ) तथैव द्रष्टव्यं, इह खल्विति, इह–क्षेत्रे प्रवचने वा,
खलुशब्दो विशेषणार्थः, न केवलमिह, किं त्वन्यत्राप्यन्यतीर्थकृत्प्रवचनेष्वपि, स्थविरैः–गणधरैर्भगवद्भिः–परमैश्वर्या-
दियुक्तैश्चत्वारि विनयसमाधिस्थानानि–विनयसमाधिभेदरूपाणि प्रज्ञप्तानि–प्ररूपितानि, भगवतः सकाशे श्रुत्वा
ग्रन्थत उपरचितानीत्यर्थः, कतराणि खलु तानीत्यादिना प्रश्नः, अमूनि खलु तानीत्यादिना निर्वचनं, तद्यथेत्युदा-
हरणोपन्यासार्थः–विनयसमाधिः १ श्रुतसमाधिः २ तपःसमाधिः ३ आचारसमाधिः ४, तत्र समाधानं समाधिः–परमार्थत
आत्मनो हितं सुखं स्वास्थ्यं, विनये विनयाद्वा समाधिः विनयसमाधिः, एवं शेषेष्वपि शब्दार्थो भावनीयः । १६ । एतदेव
श्लोकेन संगृह्णाति–विणए इत्यादि, विनये–यथोक्तलक्षणे श्रुते–अङ्गादौ तपसि–बाह्यादौ आचारे च–मूलगुणादौ,
चशब्दस्य व्यवहित उपन्यासः, नित्यं–सर्वकालं पण्डिताः–सम्यक्परमार्थवेदिनः, किं कुर्वन्तीत्याह–अभिरमयन्त्यने-
कार्थत्वादाभिमुख्येन विनयादिषु युञ्जते आत्मानं–जीवं, किमिति ?, अस्योपादेयत्वात्, क एवं कुर्वन्तीत्याह–ये भवन्ति



मानार्हान्–मानयोग्यान् तपस्वी सन्, जितेन्द्रियः सत्यरत इति प्राधान्यख्यापनार्थं विशेषणद्वयं, स पूज्य इति ॥ ४५१ ॥ तथा–तेसिं गुरूणंति, तेषां गुरूणामनन्तरोदितानां गुणसागराणां–गुणसमुद्राणां सम्बन्धीनि श्रुत्वा मेधावी सुभाषितानि–परलोकोपकारकाणि चरति–आचरति मुनिः–साधुः पञ्चरतः–पञ्चमहाव्रतसक्तः त्रिगुप्तो–मनोगुप्त्यादिमान् चतुष्कषायापगत इत्यपगतक्रोधादिकषायो यः स पूज्य इति ॥ ४५२ ॥ प्रस्तुतफलाभिधानेनोपसंहरन्नाह–गुरुन्ति, गुरुमाचार्यादिरूपमिह–मनुष्यलोके सततं–अनवरतं परिचर्य–विधिनाऽऽराध्य मुनिः–साधुः, किंविशिष्टो मुनिरित्याह–जिनवचन(मत)निपुणः–आगमे प्रवीणः, अभिगमकुशलो–लोकप्राघूर्णकादिप्रतिपत्तिदक्षः, स एवंभूतो विधूय रजोमलं पुराकृतं क्षपयित्वाऽष्टप्रकार कर्मेति भावः, किमित्याह–भास्वरां ज्ञानतेजोमयत्वादतुलां–अनन्यसदृशीं गतिं–सिद्धिरूपां व्रजतीति–गच्छति, तदा जन्मान्तरेण वा सुकुलप्रत्यागमनप्रत्ययोत्पादादिना प्रकारेण ॥ ४५३ ॥ ब्रवीमीति पूर्ववत् ॥

इति विनयसमाधावुक्तस्तृतीय उद्देशकः ९–३ ॥

---

सुयं मे आउसं ! तेणं भगवया एवमक्खायं–इह खलु थेरेहिं भगवंतेहिं, चत्तारि विणयसमाहिट्ठाणा पन्नत्ता। कयरे खलु ते थेरेहिं भगवंतेहिं चत्तारि विणयसमाहिट्ठाणा पन्नत्ता ?, इमे

बुध्यते, तच्चावबुद्धं सत्पुनरधितिष्ठति–यथावत्करोति, न च कुर्वन्नपि मानमदेन–मानगर्वेण माद्यति–मदं याति, विनयसमाधौ–विनयसमाधिविषये आयतार्थिकः–मोक्षार्थीति ॥ ४५५ ॥

चउव्विहा खलु सुयसमाही भवइ, तंजहा–सुयं मे भविस्सइत्ति अज्झाइयव्वं भवइ १, एगग्गचित्तो भविस्सामित्ति अज्झाइयव्वयं भवइ २, अप्पाणं ठावइस्सामित्ति अज्झाइयव्वयं भवइ ३, ठिओ परं ठावइस्सामित्ति अज्झाइयव्वयं भवइ ४ चउत्थं पयं भवइ। सू० १८। भवइ य एत्थ सिलोगो–

नाणमेगग्गचित्तो य, ठिओ अ ठावई परं। सुयाणि य अहिज्जित्ता, रयो सुयसमाहिए ॥ ४५६ ॥

उक्तो विनयसमाधिः, श्रुतसमाधिमाह–चउव्विहा इत्यादि, चतुर्विधः खलु श्रुतसमाधिर्भवति, तद्यथेत्युदाहरणोपन्यासार्थः। श्रुतं मे आचारादि द्वादशाङ्गं भविष्यतीत्यनया बुद्ध्या अध्येतव्यं भवति, न गौरवाद्यालम्बनेन १, तथा अध्ययनं कुर्वन्नेकाग्रचित्तो भविष्यामि न च विप्लुतचित्त इत्यध्येतव्यं भवति अनेन चालम्बनेन २, तथाऽध्ययनं कुर्वन् विदितधर्म्मतत्त्व आत्मानं स्थापयिष्यामि शुद्धधर्मे इत्यनेन चालम्बनेनाध्येतव्यं भवति ३, तथा अध्ययनफलात् स्थितः स्वयं धर्म्मे परं विनेयं स्थापयिष्यामि तत्रैवेत्यध्येतव्यं भवत्यनेन चालम्बनेनाध्येतव्यं ४ चतुर्थं पदं भवति। १८। भवति चात्र श्लोक इति पूर्ववत्, स चायं नाणमिति, ज्ञानमित्यध्ययनपरस्य ज्ञानं भवत्येकाग्रचित्तश्च तत्परतया एकाग्रालम्बनश्च भवति, स्थित इति विवेकाद्धर्म्मस्थितो भवति, स्थापयति परमिति स्वयं धर्म्मस्थितत्वादन्यमपि स्थाप-

जितेन्द्रियाः-जितचक्षुरादिभावशत्रवः, त एव परमार्थतः पण्डिता इति प्रदर्शनार्थमेतदिति ॥ ४५४ ॥

चउव्विहा खलु विणयसमाही हवइ, तंजहा-अणुसासिज्जंतो सुस्सूसइ १, सम्मं संपडिवज्जइ २, वेयमाराहइ ३, न य भवइ अत्तसंपग्गहिए ४ चउत्थं पयं भवइ । सू० १७। भवइ य एत्थ सिलोगो-पेहेइ हियाणुसासणं, सुस्सूसई तं च पुणो अहिट्ठए। न य माणमएण मज्जई, विणयसमाही आययट्ठिए ॥ ४५५ ॥

विनयसमाधिमभिधित्सुराह-चउविहेत्यादि, चतुर्विधः खलु विनयसमाधिर्भवति, तद्यथेत्युदाहरणोपन्यासार्थः, अणुसासिज्जंतो इत्यादि, अनुशास्यमानस्तत्र तत्र चोद्यमानः शुश्रूषति-तदनुशासनमर्थितया श्रोतुमिच्छति १, इच्छाप्रवृत्तितः तत् सम्यक्सम्प्रतिपद्यते, सम्यग्-अविपरीतमनुशासनतत्त्वं यथाविषयमवबुध्यते २, स चैवं विशिष्टप्रतिपत्तेरेव वेदमाराधयति, वेद्यते अनेनेति वेदः-श्रुतज्ञानं तद्यथोक्तानुष्ठानपरतया सफलीकरोति ३, अत एव विशुद्धप्रवृत्तेर्न च भवत्यात्मसंप्रगृहीतः-आत्मा एव सम्यक् प्रकर्षेण गृहीतो येनाहं विनीतः सुसाधुरित्येवमादिना स तथा, वनात्मोत्कर्षप्रधानत्वाद्विनयादेः, न चैवंभूतो भवतीति अभिप्रायः, चतुर्थं पदं भवतीत्येतदेव यथाक्रमप्रामाण्यादुत्तरोत्तरगुणापेक्षया चतुर्थमिति ४ । १७। भवति चात्र श्लोकः, अत्रेति विनयसमाधौ श्लोकः-छन्दोविशेषः, स चायं-पेहेइत्ति-प्रार्थयते हितानुशासनं-इच्छति इहलोकपरलोकोपकारिणमाचार्यादिभ्य उपदेशं, शुश्रूषतीत्यनेकार्थत्वात् यथाविषयमव-

चिरन्तनं कर्म, नवं च न बध्नात्येवं युक्तः सदा तपःसमाधाविति ॥ ४५७ ॥

चउव्विहा खलु आयारसमाही भवइ, तंजहा—नो इहलोगट्ठयाए आयारमहिट्ठेज्जा १, नो परलोगट्ठयाए आयारमहिट्ठेज्जा २, नो कित्तिवण्णसद्दसिलोगट्ठयाए आयारमहिट्ठेज्जा ३, नन्नत्थ आरहंतेहिं हेऊहिं आयारमहिट्ठेज्जा ४, चउत्थं पयं भवइ । सू० २० । भवइ य एत्थ सिलोगो—

जिणवयणरए अतिंतिणे, पडिपुन्नाययमाययट्ठिए ।
आयारसमाहिसंवुडे, भवइ य दंते भावसंधए ॥ ४५८ ॥
अभिगम चउरो समाहिओ, सुविसुद्धो सुसमाहियप्पओ ।
विउलहियं सुहावहं पुणो, कुवइ असो पयखेममप्पणो ॥ ४५९ ॥
जाइ(जरा)मरणाओ मुच्चई, इत्थंथं च चएइ सव्वसो ।
सिद्धे वा भवइ सासए, देवे वा अप्परए महड्ढिए ॥ ४६० ॥ त्ति बेमि ॥ ९–४ ॥

विणयसमाहीणामज्झयणं समत्तं ९ ॥

यति, श्रुतानि च नानाप्रकाराण्यधीते, अधीत्य च रतः-सक्तो भवति, श्रुतसमाधाविति ॥ ४५६ ॥

चउव्विहा खलु तवसमाही भवइ, तंजहा—नो इहलोगट्ठयाए तवमहिट्ठेज्जा १, नो परलोगट्ठयाए तवमहिट्ठेज्जा २, नो कित्तिवण्णसद्दसिलोगट्ठयाए तवमहिट्ठेज्जा ३, नन्नत्थ निज्जरट्ठयाए तवमहिट्ठेज्जा ४, चउत्थं पयं भवइ। सू० १९। भवइ य एत्थ सिलोगो—विविहगुणतवोरए य निच्चं, भवइ निरासए निज्जरट्ठिए। तवसा धुणइ पुराणपावगं, जुत्तो सया तवसमाहिए ॥ ४५७॥

उक्तः श्रुतसमाधिः, तपःसमाधिमाह—चउव्विहा इत्यादि, चतुर्विधः खलु तपःसमाधिर्भवति, तद्यथेत्युदाहरणोपन्यासार्थः, नेहलोकार्थमिहलोकनिमित्तं लब्ध्यादिवाञ्छया तपः-अनशनादिरूपमधितिष्ठेत्-कुर्यात् धम्मिलवत् १, तथा न परलोकार्थं-जन्मान्तरभोगनिमित्तं तपोऽधितिष्ठेद् ब्रह्मदत्तवत् २, एवं न कीर्त्तिवर्णशब्दश्लाघार्थमिति, सर्वदिग्व्यापी साधुवादः कीर्त्तिः, एकदिग्व्यापी वर्णो, अर्द्धदिग्व्यापी शब्दः, तत्स्थान एव श्लाघा, नैवदर्थं तपोऽधितिष्ठेत् ३, अपि तु नान्यत्र निर्जरार्थमिति, न कर्म्मनिर्जरामेकां विहाय तपोऽधितिष्ठेत्, अकामः सन् यथा कर्मनिर्जरैव फलं भवति तथाधितिष्ठेदित्यर्थः ४, चतुर्थं पदं भवति। १९। भवति चात्र श्लोक इति पूर्ववत्, स चायं—विविहेत्यादि, विविधगुणतपोरतो हि नित्यमनशनाद्यपेक्षयाऽनेकगुणं यत्तपस्तद्रत एव सदा भवति, निराशो—निष्प्रत्याश इहलोकादिषु, निर्जरार्थिकः—कर्मनिर्जरार्थी, स एवंभूतः तपसा विशुद्धेन धुनोति—अपनयति पुराणपापं—

इति श्रीसुमतिसाधुविरचितावचूरौ नवमं विनयसमाधिनाममध्ययनं समाप्तम् ९ ॥

अधुना सभिक्ष्वाख्यमारभ्यते, अस्य चायमभिसम्बन्धः, इहानन्तराध्ययने व्याख्यातं विनयसमाध्यध्ययनम् ॥ आचारप्रणिहितो यथोचितविनयसंपन्नो भवतीत्येतदुक्तं, इह त्वेतेष्वेव नवस्वध्ययनार्थेषु यो व्यवस्थितः स सम्यग्भिक्षुरित्येतदुच्यते, इत्यनेनाभिसम्बन्धेनायातमिदमध्ययनमिति । तच्चेदं—

निक्खम्ममाणाइ य बुद्धवयणे, निच्चं चित्तसमाहिओ हवेज्जा ।
इत्थीण वसं न यावि गच्छे, वंतं नो पडियायइ जे स भिक्खू ॥ ४६१ ॥
पुढविं न खणे न खणावए, सीओदगं न पिए न पियावए ।
अगणिसत्थं जहा सुनिसियं, तं न जले न जलावए जे स भिक्खू ॥ ४६२ ॥
अनिलेण न वीए न वीयावए, हरियाणि न छिंदे न छिंदावए ।
बीयाणि सया विवज्जयंतो, सच्चित्तं नाहारए जे स भिक्खू ॥ ४६३ ॥
वहणं तसथावराण होइ, पुढवीतणकट्ठनिस्सियाणं ।

उक्तः तपःसमाधिः, आचारसमाधिमाह–चउव्विहा इत्यादि, चतुर्विधः खल्वाचारसमाधिर्भवति, तद्यथेत्युदाहरणोपन्यासार्थः, नेहलोकार्थमित्याद्याचाराभिधानभेदेन पूर्ववत्, यावन्नान्यत्रार्हतैरर्हत्सम्बन्धिभिर्हेतुभिरनाश्रवत्वादिभिः आचारं–मूलगुणोत्तरगुणमयमधितिष्ठेत्, निरीहः सन् यथा मोक्ष एव भवतीति चतुर्थं पदं भवति। २०। भवति चात्र श्लोक इति पूर्ववत्, स चायं–जिणवयणरए इत्यादि, जिनवचनरतः–आगमे सक्तः, अतिन्तिनः–न सकृत्किञ्चिदुक्तः सन्नसूयया भूयो भूयो वक्ता, प्रतिपूर्णः सूत्रादिना, आयतमायातार्थिकः–अत्यन्तं मोक्षार्थी आचारसमाधिसंवृत इत्याचारे यः समाधिस्तेन स्थगिताश्रवद्वारः सन् भवति च दान्त–इन्द्रियनोइन्द्रियदमाभ्यां भावसन्धको–भावो–मोक्षस्तत्सन्धक आत्मनो मोक्षासन्नकारीति ॥ ४५८ ॥ सर्वसमाधिफलमाह–अभिगमेति, अभिगम्य–विज्ञायासेव्य च चतुरः समाधीननन्तरोदितान्, सुविशुद्धो मनोवाक्कायैः, सुसमाहितात्मा सप्तदशविधे संयमे, स एवंभूतो धर्मराज्यमासाद्य विपुलहितसुखावहं पुनरिति विपुलं–विस्तीर्णं हितं तदात्वे आयत्यां च पथ्यं सुखमावहति–प्रापयति यत्तत् तथाविधं, करोत्यसौ साधुः पदं–स्थानं, क्षेमं–शिवं, आत्मन एव, न त्वन्यस्येति अनेनैकान्तक्षणभङ्गव्यवच्छेदमाहेति ॥ ४५९ ॥ एतदेव स्पष्टयति—जाइ इति, जातिजरामरणात्–जन्मजरामरणात्संसारान्मुच्यते, असौ सुसाधुरित्थंस्थं चेति इदंप्रकारमापन्नमित्थं इत्थं तिष्ठतीतीत्थंस्थं—नारकादिव्यपदेशबीजं वर्णसंस्थानादि तच्च चयइ–त्यजति सर्वशः–सर्वैः प्रकारैरपुनर्ग्रहणतया, एवं सिद्धो वा कर्मक्षयात् सिद्धो भवति, शाश्वतोऽपुनरागामी सावशेषकर्मा देवो वाऽल्परतः—पामापरिगतकण्डूयनकल्परतरहितो महर्द्धिकः—अनुत्तरवैमानिकादिः ॥ ४६० ॥ ब्रवीमीति पूर्ववत् ॥ इति विनयसमाधौ चतुर्थ उद्देशकः ॥

ततश्च न दोष इति ॥ ४६२ ॥ तथा अनिलेति-अनिलेनानिलहेतुना चेलकर्णादिना न वीजयत्यात्मादि स्वयं; न वीजयति परैः, हरितानि-शष्पादीनि न छिनत्ति स्वयं न छेदयति परैः, वीजानि-हरितफलरूपाणि व्रीह्यादीनि सदा-सर्वकालं विवर्जयेत् संघट्टनादिक्रियया, सचित्तं नाहारयति यः कदाचित् अप्यपुष्टालम्बनः स भिक्षुरिति ॥ ४६३ ॥ औद्देशिकादिपरिहारेण त्रसस्थावरपरिहारमाह-वहणमिति, वधनं-हननं त्रसस्थावराणां-द्वीन्द्रियादिपृथिव्यादीनां भवति कृतौद्देशिके, किंविशिष्टानां ?-पृथिवीतृणकाष्ठनिश्रितानां तथासमारम्भात्, यस्मादेवं तस्मादौद्देशिकं कृतादि, अन्यच्च सावद्यं न भुङ्क्ते, न केवलं एतत् किन्तु नापि पचति स्वयं, न पाचयत्यन्यैः, न पचन्तमनुजानाति यः स भिक्षुरिति ॥ ४६४ ॥ रोइत्ति, रोचयित्वा-विधिग्रहणभावनाभ्यां प्रियं कृत्वा, किं तदित्याह-ज्ञातपुत्रवचनं भगवन्महावीरवचनं आत्मसमान्-आत्मतुल्यान्मन्यते षडपि कायान्-पृथिव्यादीन्, पञ्च चेति चशब्दोऽपिशब्दार्थः पञ्चापि स्पृशति-सेवते महाव्रतानि, पञ्चाश्रवसंवृतश्च द्रव्यतोऽपि पञ्चेन्द्रियसंवृतश्च यः स भिक्षुरिति ॥ ४६५ ॥

चत्तारि वमे सया कसाए, धुवजोगी य हवेज्ज बुद्धवयणे ।
अहणे निज्जायरूवरयणे, गिहिजोगं परिवज्जए जे स भिक्खू ॥ ४६६ ॥
सम्मद्दिट्ठी सया अमूढे, अत्थि हु नाणे तवे संजमे य ।
तवसा धुणइ पुराणपावगं, मणवयकायसुसंवुडे जे स भिक्खू ॥ ४६७ ॥

तम्हा उद्देसिअं न भुंजे, नोऽवि पए न पयावए जे स भिक्खू ॥ ४६४ ॥

रोइअ, नायपुत्तवयणे, अप्प(त्त)समे मन्नेज्ज छप्पि काए ।

पंच य फासे महव्वयाइं, पंचासवसंवरे जे स भिक्खू ॥ ४६५ ॥

किंच-निक्खम्मेति, निष्क्रम्य-द्रव्यभावगृहात्, प्रव्रज्यां गृहीत्वेत्यर्थः आज्ञया-तीर्थकरगणधरोपदेशेन योग्यतायां सत्यां, निष्क्रम्य किमित्याह-बुद्धवचने-अवगततत्त्वतीर्थकरगणधरवचने नित्यं-सर्वकालं चित्तसमाहितश्चित्तेनातिप्रसन्नो भवेत्, प्रवचन एवाभियुक्त इति गर्भः। व्यतिरेकतः समाधानोपायमाह-स्त्रीणां सर्वासामनर्थकार्यनिबन्धनभूतानां वशं-तत्परतन्त्रतां(तदायत्तता)रूपं न चापि गच्छेत्, तद्वशगो हि नियमतो वान्तं प्रत्यापिबति, अतो बुद्धवचनचित्तसमाधानतः सर्वथा स्त्रीपरित्यागात्, अनेनैवोपायेन, अन्योपायासम्भवात्, वान्तं-परित्यक्तं मद्विषयजम्बालं न प्रत्यापिबति-न मनागप्याभोगतोऽनाभोगतश्च तत्सेवते यः स भिक्षुर्भावभिक्षुरिति ॥ ४६१ ॥ तथा पुढवीति, पृथ्वीं-सचेतनादिरूपां न खनति स्वयं, न खानयति परैः, "एकग्रहणे तज्जातीयग्रहणमि"ति खनन्तमप्यन्यं नानुजानातीति, एवं सर्वत्र वेदितव्यं; शीतोदकं-सचित्तं पानीयं न पिबति स्वयं, न पाययति परान्, अग्निः षड्जीवघातकः, किंवदित्याह-शस्त्रं-खड्गादि यथा सुनिशितमुज्ज्वालितं तद्वत्, तं न ज्वालयति स्वयं, न ज्वालयति परैः, य इत्थंभूतः स भिक्षुरिति, आह-षड्जीवनिकायाविद्धि सर्वाध्ययनेष्वयमर्थोऽभिहितः किमर्थं पुनरुक्त इति?, उच्यते, तदुक्तार्थानुष्ठानपर एव भिक्षुरिति ज्ञापनार्थं,

मनोवाक्कायसुसंवृतः-तिसृभिर्गुप्तिभिर्गुप्तो यः स भिक्षुरिति ॥४६७॥ किं च-तहेव असणंति, तथैवेति पूर्वविधाने-नाशनं पानं च प्रागुक्तस्वरूपं तथा विविधमनेकप्रकारं खाद्यं स्वाद्यं च प्रागुक्तस्वरूपमेव लब्ध्वा-प्राप्य, किमित्याह-भविष्यत्यर्थः-प्रयोजनमनेन श्वः परश्वो वेति तद्-अशनादि न निधत्ते-न स्थापयति स्वयं, तथा न निधापयति-न स्थापयत्यन्यैः, स्थापयन्तमन्यं नानुजानाति, यः सर्वथा संनिधिपरित्यागवान् स भिक्षुरिति ॥ ४६८ ॥ किंच-तहेवत्ति, तथैवाशनं पानं च विविधं खाद्यं स्वाद्यं च लब्ध्वेति पूर्ववत्, लब्ध्वा किमित्याह-छन्दित्वा-निमन्त्र्य समानधार्मिकान्-साधून् भुङ्क्ते, स्वात्मतुल्यत्वाद्वात्सल्यसिद्धेः, तथा भुक्त्वा स्वाध्यायरतश्च यः चशब्दो विशेषानुष्ठानपरश्च यः स भिक्षुरिति ॥ ४६९ ॥ भिक्षुलक्षणाधिकार एवाह-न ये त्ति, न च वैग्रहिकीं-कलहप्रतिबद्धां कथां कथयति, सद्वादकथादिष्वपि न च कुप्यति परस्यापि तु निभृतेन्द्रियोऽनुद्धतेन्द्रियः प्रशान्तो-रागादिरहित एवास्ते, तथा संयमे-पूर्वोक्ते ध्रुवं-सर्वकालं योगेन-कायवाङ्मनःकर्मलक्षणेन युक्तः-योगयुक्तः, प्रतिभेदमौचित्येन प्रवृत्तेः, तथोपशान्तोऽनाकुलः कायचापलादिरहितः, अविहेठकः न क्वचिदुचितेऽनादरवान्, क्रोधादीनां विश्लेपक इत्यन्ये, ये इत्थंभूतः स भिक्षुरिति ॥ ४७० ॥

जो सहइ हु गामकण्टए, अक्कोसपहारतज्जणाओ य ।
भयभेरवसद्दसप्पहासे, समसुहदुक्खसहे य जे स भिक्खू ॥ ४७१ ॥

तहेव असणं पाणगं वा, विविहं खाइमसाइमं लभित्ता।
होही अट्ठो सुए परे वा, तं न निहे न निहावए जे स भिक्खू ॥ ४६८ ॥
तहेव असणं पाणगं वा, विविहं खाइमसाइमं लभित्ता।
छंदिय साहम्मिआण भुंजे, भुच्चा सज्झायरए जे स भिक्खू ॥ ४६९ ॥
न य वुग्गहियं कहं कहेज्जा, न य कुप्पे निहुइंदिए पसंते।
संजमे धुवं जोगेण जुत्ते, उवसंते अविहेडए जे स भिक्खू ॥ ४७० ॥

किंच–चत्तारिवि, चतुरः क्रोधादीन् वमति तत्प्रतिपक्षाभ्यासेन सदा–सर्वकालं कषायान्, ध्रुवयोगी चोचितनित्ययोगवांश्च भवति, बुद्धवचन इति तृतीयार्थे सप्तमी, तीर्थकरवचनेन करणभूतेन, ध्रुवयोगी भवति, यथागममेवेति भावः, अधनश्चतुष्पदादिरहितो निर्जातरूपरजतो–निर्गतसुवर्णरूप्य इति भावः, गृहियोगं–मूर्च्छया गृहस्थसम्बन्धं परिवर्ज्जयति सर्व्वैः प्रकारैः परित्यजति यः स भिक्षुरिति ॥ ४६६ ॥ तथा–सम्मद्दिट्ठीति, सम्यग्दृष्टिः–भावसम्यग्दर्शनी यः सदाऽमूढः–अविप्लुतः सन्नेवं मन्यते अस्त्येव ज्ञानं हेयोपादेयविषयमतीन्द्रियेष्वपि, तपश्च बाह्याभ्यन्तरकर्म्ममलापनयनजलकल्पं संयमश्च नवकर्म्मानुपादानरूपः, इत्थं च दृढभावस्तपसा धुनोति पुराणं पापं भावसारतया प्रवृत्त्या,

एतदेव स्पष्टयति–पडिमंति, प्रतिमां–मासादिरूपां प्रतिपद्य–सविधिमङ्गीकृत्य स्मशाने–पितृवने, न बिभेति–न भयं
यांति, भैरवभयानि दृष्ट्वा–रौद्रभयहेतूनुपलभ्य वैतालिकादिरूपशब्दादि, विविधगुणतपोरतश्च नित्यं–मूलगुणाद्य-
नशनादिसक्तश्च सर्वकालं, न शरीरमभिकाङ्क्षते निःस्पृहतया वार्त्तमानिकं भावि च, य इत्थंभूतः स भिक्षु-
रिति ॥ ४७२ ॥ असइंति, न सकृदसकृत्सर्वदैवेत्यर्थः, किमित्याह–व्युत्सृष्टत्यक्तदेहः–व्युत्सृष्टो भावप्रतिबन्धाभावेन,
त्यक्तो–विभूषाकरणेन, देहः–शरीरं येन स तथाविधः, आक्रुष्टो वा ज(य)कारादिना, हतो वा दण्डादिना, लूषितो
वा खड्गादिना, भक्षितो वा शृगालादिना, पृथिवीसमः–सर्वसहो मुनिर्भवति, न च रागादिना पीड्यते, तथाऽ-
निदानो–भाविफलाशंसारहितः, अकुतूहलश्च नटादिषु, य एवंभूतः स भिक्षुरिति ॥ ४७३ ॥ भिक्षुस्वरूपाभिधानाधिकार
एवाह–अभिभूयत्ति, अभिभूय–पराजित्य, कायेन–शरीरेणापि, न भिक्षुसिद्धान्तनीत्या मनोवाग्भ्यामेव, कायेनानभिभवे
तत्त्वतस्तदनभिभवात्, परीषहान्–क्षुदादीन्, समुद्धारयत्युत्तारयति, जातिपथात्–संसारमार्गादात्मानं कथमित्याह–
विदित्वा–विज्ञाय, जातिमरणं–संसारमूलं महाभयं–महाभयकारणं, ततः–तपसि रतः–सक्तः, किंभूतः ? इत्याह–
श्रामण्ये–श्रमणानां सम्बन्धिनि, शुद्ध इति भावः, य एवंभूतः स भिक्षुरिति ॥ ४७४ ॥ हत्थत्ति, हस्तसंयतः पाद-
संयत इति, कारणं विना कूर्मवल्लीन आस्ते, कारणे च सम्यग्गच्छति, तथा वाक्संयतः–अकुशलवाग्निरोधात् कुशलवागुदी-
रणेन संयतेन्द्रियो–निवृत्तविषयप्रसरः अध्यात्मरतः–प्रशस्तध्यानासक्तः, सुसमाहितात्मा ध्यानापादकगुणेषु, तथा
सूत्रार्थं च यथावस्थितं विधिग्रहणशुद्धं विजानाति यः सम्यग्यथाविषयं स भिक्षुरिति ॥ ४७५ ॥

पडिमं पडिवज्जिया मसाणे, नो भीयए भयभेरवाइं दिस्स ।
विविहगुणतवोरए य निच्चं, न सरीरं चाभिकङ्खए जे स भिक्खू ॥ ४७२ ॥
असइं वोसट्ठचत्तदेहे, अक्कुट्ठे व हए लूसिए वा ।
पुढविसमे मुणी हवेज्जा, अनियाणे अकोउहल्ले जे स भिक्खू ॥ ४७३ ॥
अभिभूय कायेण परीसहाइं, समुद्धरे जाइपहाओ अप्पयं ।
विइत्तु जाईमरणं महब्भयं, तवे रए सामणिए जे स भिक्खू ॥ ४७४ ॥
हत्थसंजए पायसंजए, वायसंजए संजइंदिए ।
अज्झप्परए सुसमाहिअप्पा, सुत्तत्थं च वियाणइ जे स भिक्खू ॥ ४७५ ॥

किंच–जो सहइत्ति, यः खलु महात्मा सहते सम्यग्ग्रामकण्टकान् ग्रामा–इन्द्रियाणि तद्दुःखहेतवः कण्टकास्तान्, स्वरूपत एवाह–आक्रोशान् प्रहारान् तर्जनांश्चेति, तत्राक्रोशा यकारादिभिः, प्रहाराः कशादिभिः, तर्जना असूयादिभिः, तथा भैरवभया–अत्यन्तरौद्रभयजनकाः शब्दाः सप्रहासा यस्मिन् स्थान इति गम्यते, तत्तथा तस्मिन्, वैतालादिकृतार्त्तनादाट्टहास इत्यर्थः, अत्रोपसर्गेषु सत्सु समसुखदुःखसहश्च–योऽचलितसामायिकभावः स भिक्षुरिति ॥ ४७१ ॥

छिंदित्तु जाईमरणस्स बंधणं, उवेइ भिक्खू अपुणागमं गइं ॥ ४८१ ॥ तिबेमि ॥

सभिक्खुअज्झयणं दसमं समत्तं १० ॥

तथा उवहिंमित्ति, उपधौ-वस्त्रादिलक्षणे अमूर्च्छितः-तद्विषयमोहत्यागेन अगृद्धः-प्रतिबन्धाभावेन, अज्ञातोञ्छं चरति भावपरिशुद्धं, स्तोकं स्तोकमित्यर्थः पुलाकनिष्पुलाकः-संयमासारतापादकदोपरहितः, क्रयविक्रयसंनिधिभ्यो विरतः-द्रव्यभावभेदभिन्नक्रयविक्रयपर्युषितस्थापनेभ्यो निवृत्तः, सर्वसङ्गापगतश्च योऽपगतद्रव्यभावसङ्गश्च यः, स भिक्षु-रिति ॥ ४७६ ॥ किंच-अलोलेति, अलोलो नाम नाप्राप्तप्रार्थनापरो भिक्षुः-साधुर्न रसेषु गृद्धः, प्राप्तेष्वपि अप्रतिबद्ध इति भावः, उञ्छं चरति भावोञ्छमेवेति पूर्ववत् । नवरं तत्रोपधिमाश्रित्योक्तमिह त्वाहारमित्यपौनरुक्त्यं । तथा जीवितं नाभिकाङ्क्षते असंयमजीवितं, तथा ऋद्धिं च-आमर्पौषध्यादिरूपां, सत्कारं-वस्त्रादिभिः, पूजनं च-स्तवादिना त्यजति नैवदर्थं एव यतते, स्थितात्मा ज्ञानादिषु, अनिभ इत्यमायो यः स भिक्षुरिति ॥ ४७७ ॥ तथा न परमिति, न परं स्वपक्षविनेयव्यतिरिक्तं वदति-अयं कुशीलस्तदप्रीत्यादिदोपप्रसङ्गात्, स्वपक्षविनेयं तु शिक्षाग्रहणबुद्ध्या वदत्यपि, सर्वथा येनान्यः कश्चित्कुप्यति न तद्ब्रवीति दोपसद्भावेऽपि, किमित्यत आह-ज्ञात्वा प्रत्येकं पुण्यपापं, नान्यसम्बन्धि अन्यस्य भवति अग्निदाहवेदनावत्, एवं सत्स्वपि गुणेपु नात्मानं समुत्कर्षति-न स्वगुणैर्गर्वमायाति यः स भिक्षुरिति ॥ ४७८ ॥ मदप्रतिपेधार्थमाह-न जाइमत्तेति, न जातिमत्तो यथाऽहं ब्राह्मणः क्षत्रियो वा, न चापि रूपमत्तो यथाऽहं

उवहिम्मि अमुच्छिए अगिद्धे, अन्नायउञ्छं पुलनिप्पुलाए ।
कयविक्कयसन्निहिओ विरए, सव्वसंगावगए य जे स भिक्खू ॥ ४७६ ॥
अलोल भिक्खू न रसेसु गिज्झे, उञ्छं चरे जीविय नाभिकङ्खे ।
इड्ढिं च सक्कारणपूयणं च, चए ठियप्पा अणिहे जे स भिक्खू ॥ ४७७ ॥
न परं वइज्जासि अयं कुसीले, जेणऽन्न कुप्पेज्ज न तं वएज्जा ।
जाणिय पत्तेयं पुण्णपावं, अत्ताणं न समुक्कसे जे स भिक्खू ॥ ४७८ ॥
न जाइमत्ते न य रूवमत्ते, न लाभमत्ते न सुएण मत्ते ।
मयाणि सव्वाणि विवज्जइत्ता, धम्मज्झाणरए जे स भिक्खू ॥ ४७९ ॥
पवेयए अज्जपयं महामुणी, धम्मे ठिओ ठावयई परं पि ।
निक्खम्म वज्जेज्ज कुसीललिङ्गं, न यावि हासंकुहए जे स भिक्खू ॥ ४८० ॥
तं देहवासं असुइं असासयं, सया चए निच्चहियट्ठियप्पा ।

छिंदित्तु जाईमरणस्स वंधणं, उवेइ भिक्खू अपुणागमं गइं ॥ ४८१ ॥ त्तिबेमि ॥

सभिक्खुअज्झयणं दसमं समत्तं १० ॥

तथा उवहिंमित्ति, उपधौ-वस्त्रादिलक्षणे अमूर्च्छितः-तद्विषयमोहत्यागेन अगृद्धः-प्रतिबन्धाभावेन, अज्ञातोञ्छं चरति भावपरिशुद्धं, स्तोकं स्तोकमित्यर्थः पुलाकनिष्पुलाकः-संयमासारतापादकदोषरहितः, क्रयविक्रयसंनिधिभ्यो विरतः-द्रव्यभावभेदभिन्नक्रयविक्रयपर्युषितस्थापनेभ्यो निवृत्तः, सर्वसङ्गापगतश्च योऽपगतद्रव्यभावसङ्गश्च यः, स भिक्षुरिति ॥ ४७६ ॥ किंच-अलोलेति, अलोलो नाम नाप्राप्तप्रार्थनापरो भिक्षुः-साधुर्न रसेषु गृद्धः, प्राप्तेष्वपि अप्रतिबद्ध इति भावः, उञ्छं चरति भावोञ्छमेवेति पूर्ववत् । नवरं तत्रोपधिमाश्रित्योक्तमिह त्वाहारमित्यपौनरुक्त्यं । तथा जीवितं नाभिकाङ्क्षते असंयमजीवितं, तथा ऋद्धिं च-आमर्षौषध्यादिरूपां, सत्कारं-वस्त्रादिभिः, पूजनं च-स्तवादिना त्यजति नैतदर्थं एव यतते, स्थितात्मा ज्ञानादिषु, अनिभ इत्यमायो यः स भिक्षुरिति ॥ ४७७ ॥ तथा न परमिति, न परं स्वपक्षविनेयव्यतिरिक्तं वदति-अयं कुशीलस्तदप्रीत्यादिदोषप्रसङ्गात्, स्वपक्षविनेयं तु शिक्षाग्रहणबुद्ध्या वदत्यपि, सर्वथा येनान्यः कश्चित्कुप्यति न तद्ब्रवीति दोषसद्भावेऽपि, किमित्यत आह-ज्ञात्वा प्रत्येकं पुण्यपापं, नान्यसम्बन्धि अन्यस्य भवति अग्निदाहवेदनावत्, एवं सत्स्वपि गुणेषु नात्मानं समुत्कर्षति-न स्वगुणैर्गर्वमायाति यः स भिक्षुरिति ॥ ४७८ ॥ मदप्रतिषेधार्थमाह-न जाइमत्तेति, न जातिमत्तो यथाऽहं ब्राह्मणः क्षत्रियो वा, न चापि रूपमत्तो यथाऽहं

रूपवान्, आदेयः, न लाभमत्तो यथाऽहं लाभवान्, न श्रुतमत्तो यथाऽहं पण्डितः, अनेन कुलमदादिपरिग्रहः, अत एवाह—मदान् सर्वानपि कुलादिविषयान्विवर्ज्य–परित्यज्य धर्म्मध्यानरतो–यो यथागमं तत्र सक्तः स भिक्षुरिति ॥ ४७९ ॥ किंच–पवेयए इत्यादि, प्रवेदयति–कथयत्यार्यपदं–शुद्धधर्मपदं परोपकाराय महामुनिः–शीलवान् ज्ञाता एवंभूत एव वस्तुतो नान्यः, किमित्येतदेवमित्याह–धर्म्मे स्थितः स्थापयति परमपि–श्रोतारं, तत्रादेयभावप्रवृत्तेः, तथा निष्क्रम्य वर्जयति कुशीललिंगं–आरम्भादि कुशीलचेष्टितं, तथा न चापि हास्यकुहको–न हास्यकारिकुहकयुक्तो यः स भिक्षुरिति ॥ ४८० ॥ भिक्षुभावफलमाह–तं देहेति, तं देहवासमित्येवं प्रत्यक्षोपलभ्यमानं चारकरूपं शरीरावासमशुचिं शुक्रशोणितोद्भवत्वादिना, अशाश्वतं प्रतिक्षणपरिणत्या सदा त्यजति ममत्वानुबन्धपरित्यागेन, क इत्याह–नित्यहिते–मोक्षसाधने सम्यग्दर्शनादौ स्थितात्मा–अत्यन्तसुस्थितः, स चैवंभूतश्छित्त्वा जातिमरणस्य संसारस्य बन्धनं–कारण-मुपैति–सामीप्येन गच्छति भिक्षुः–यतिरपुनरागमां नित्यां जन्मादिरहितामित्यर्थः, गतिमिति–सिद्धिगतिम् ॥ ४८१ ॥ ब्रवीमीति पूर्ववत् ॥ इति व्याख्यातं सभिक्ष्वध्ययनम् १० ॥

---

अधुनैषतश्चूडे आरभ्येते, अनयोश्चायमभिसम्बन्ध इहानन्तराध्ययने भिक्षुगुणयुक्त एव भिक्षुरुक्तः, स चैवंभूतोऽपि कदाचि-त्कर्मपरतन्त्रत्वात् कर्मणश्च बलवत्त्वात् सीदेत्, अतस्तत्स्थिरीकरणं कर्तव्यमिति, तदर्थाधिकार एव चूडाद्वयमभिधीयते, तच्चेदं—

इह खलु भो! पव्वइएणं उप्पन्नदुक्खेणं संजमे अरइसमावन्नचित्तेणं ओहाणुप्पेहिणा

अणोहाइएणं चेव हयरस्सिगयंकुसपोयपडागाभूआइं इमाइं अट्ठारस ठाणाइं सम्मं संपडिलेहि- अव्वाइं भवंति, तंजहा—हंभो ! दुस्समाए दुप्पजीवी १, लहुसगा इत्तरिआ गिहीणं कामभोगा २, भुज्जो अ साइबहुला मणुस्सा ३, इमे अ मे दुक्खे न चिरकालोवट्ठाई भविस्सई ४, ओम- जणपुरक्कारे ५, वंतस्स य पडिआयणं ६, अहरगइवासोवसंपया ७, दुल्लहे खलु भो ! गिहीणं धम्मे गिहवासमज्झे वसंताणं ८, आयंके से वहाय होइ ९, संकप्पे से वहाय होइ १०, सोवक्केसे गिहवासे, निरुवक्केसे परिआए ११, बंधे गिहवासे मुक्खे परिआए १२, सावज्जे गिहवासे, अणवज्जे परिआए १३, बहुसाहारणा गिहीणं कामभोगा १४, पत्तेअं पुन्नपावं १५, अणिच्चे खलु भो ! मणुस्साणं जीविए कुसग्गजलबिंदुचंचले १६, बहुं च खलु भो ! पावं कम्मं पगडं १७, पावाणं च खलु भो ! कडाणं कम्माणं पुव्विं दुच्चिन्नाणं दुप्पडिकंताणं वेइत्ता मुक्खो, नत्थि अवेइत्ता, तवसा वा झोसइत्ता १८ । अट्ठारसमं पयं भवइ । सू० २१ । भवइ अ इत्थ सिलोगो—

इह खलु भो पव्वेति, इह खलु भो प्रव्रजितेन इहेति जिनप्रवचने, खलुशब्दोऽवधारणे, स च भिन्नक्रम इति

दर्शयिष्यामः, भो इत्यामन्त्रणे, प्रव्रजितेन-साधुना, किंविशिष्टेनेत्याह-उत्पन्नदुःखेन-सञ्जातशीतादिशारीरस्त्रीनिषद्यादिमानसदुःखेन संयमे-व्यावर्जितस्वरूपे अरतिसमापन्नचित्तेनोद्वेगगताभिप्रायेण संयमनिर्विण्णभावेनेत्यर्थः, स एव विशेष्यते-अवधावनोत्प्रेक्षिणा-अवधावनं-अपसरणं संयमादुत्-प्राबल्येन प्रेक्षितुं शीलं यस्य स तथाविधस्तेन, उत्प्रव्रजितुकामेनेति भावः, अनवधावितेनैव-अनुत्प्रव्रजितेनैवामूनि वक्ष्यमाणलक्षणान्यष्टादश स्थानानि सम्यग्-भावसारं सुप्रत्युपेक्षितव्यानि-सुष्ठ्वालोचनीयानि भवन्तीति योगः; अवधावितस्य तु प्रत्युपेक्षणं प्रायोऽनर्थकमिति, तान्येव विशेष्यन्ते-हयरश्मिगजाङ्कुशपोतपताकाभूतानि-अश्वखलिनगजाङ्कुशबोहित्थसितपटतुल्यानि, एतदुक्तं भवति-यथा हयादीनामुन्मार्गप्रवृत्तिकामानां रश्म्यादयो नियमनहेतवः तथा एतान्यपि संयमादुन्मार्गप्रवृत्तिकामानां भव्यसत्त्वानामिति, यतश्चैवमतः सम्यक् प्रत्युपेक्षितव्यानि भवन्ति, खलुशब्दोऽवधारणे, योगात् सम्यगेव संप्रत्युपेक्षितव्यानि एवेत्यर्थः। तद्यथेत्यादि-तद्यथेत्युदाहरणोपन्यासार्थः, हंभो! दुःषमायां दुष्प्रजीविन इति, हंभो-शिष्यामन्त्रणे, दुष्षमायां-अधमकालाख्यायां कालदोषादेव दुःखेन-कृच्छ्रेण प्रकर्षेणोदारभोगापेक्षया जीवितुं शीला दुष्प्रजीविनः, प्राणिन इति गम्यते, नरेन्द्रादीनां अपि अनेकदुःखप्रयोगदर्शनात्, उदारभोगरहितेन च विडम्बनाप्रायेण कुगतिहेतुना किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति प्रथमं स्थानम् १। तथा लघव इत्वरा गृहिणां कामभोगाः, दुष्षमायामिति वर्त्तते, सन्तोऽपि लघवः-तुच्छाः प्रकृत्यैव तुषमुष्टिवदसाराः इत्वरा-अल्पकालाः गृहिणां-गृहस्थानां कामभोगाः-मदनकामप्रधानाः शब्दादयो विषया विपाककटवश्च, न देवानामिव विपरीताः, अतः किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति द्वितीयं

स्थानम् २ । तथा भूयश्च स्वातिबहुला मनुष्याः दुष्षमायामिति वर्त्तते एव, पुनश्च स्वातिबहुला मायाप्रचुरा मनुष्या इति प्राणिनो, न कदाचित् विश्रम्भहेतवोऽमी, तद्रहितानां च कीदृक् सुखं ?, तथा तद्बन्धहेतुत्वेन दारुणतरो बन्ध इति किं गृहाश्रमेणेति, संप्रत्युपेक्षितव्यमिति तृतीयं स्थानम् ३ । पाठान्तरं वा तथा–भूयश्च सातबहुला मनुष्याः, भुक्तेष्वपि कामभोगेषु पुनरपि सुखाभिलाषिण एव मनुष्याः, अतः किं कामभोगैः ? इति संप्रत्युपेक्षितव्यमिति तृतीयं स्थानम् ३ । तथा इदं च मे दुःखं न चिरकालोपस्थायि भविष्यति, इदं चानुभूयमानं मम श्रामण्यमनुपालयतो दुःखं शारीरमानसं कर्मफलं परीषहजनितं न चिरकालमुपस्थातु शीलं भविष्यति, श्रामण्यपालनेन परीषहनिराकृतेः कर्म्मनिर्जरणात्, संयमराज्यप्राप्तेः, इतरथा महानरकादौ विपर्ययः, अतः किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति चतुर्थं स्थानम् ४ । तथा ओमजणपुरक्कारमिति न्यूनजनपूजा, प्रव्रजितो हि धर्मप्रभावाद्राजामात्यादिभिरभ्युत्थानासनाञ्जलि-प्रग्रहादिभिः पूज्यते, उत्प्रव्रजितेन तु न्यूनजनस्यापि स्वव्यसनगुप्तयेऽभ्युत्थानादि कार्यं, अधार्मिकराजविषये च वेष्टिप्रयोक्तुः खरकर्मणो नियमत एवेदमधर्मफलं, अतः किं गृहाश्रमेणेति संप्रत्युपेक्षितव्यमिति पञ्चमं स्थानं, एवं सर्वत्र क्रिया योजनीया ५। तथा वान्तस्य प्रत्यापानं भुक्तोज्झितपरिभोग इत्यर्थः, अयं च श्वशृगालादिक्षुद्रसत्त्वाचरितः सतां निन्द्यो व्याधिदुःख-जनकः, वान्ताश्च भोगाः प्रव्रज्याङ्गीकरणेन, एतत्प्रत्यापानमप्येवंभूतमेव चिन्तनीयमिति षष्ठं स्थानम् ६ । तथा अधोगतिः–नरकतिर्यग्गतिस्तस्यां वसनं अधोगतिवासः, एतन्निमित्तभूतं कर्म गृह्यते, तस्योपसंपत्–सामीप्येनाङ्गीकरणं यदेतदुत्प्रव्रजनं, एवं चिन्तनीयमिति सप्तमं स्थानम् ७। तथा दुर्लभः खलु भो ! गृहिणां धर्म्म इति प्रमादबहुलत्वाद् दुर्लभ एव,

भो! इत्यामन्त्रणे गृहस्थानां परमनिर्वृत्तिजनको धर्मः, किंविशिष्टानामित्याह–गृहवासमध्ये वसतामित्यत्र गृहशब्देन पाशकल्पाः पुत्रकलत्रादयो गृह्यन्ते, तन्मध्ये वसतामनादिभवाभ्यासादकारणं स्नेहबन्धनं, एतच्चिन्तनीयमित्यष्टमं स्थानम् ८। तथा आतङ्कस्तस्य वधाय भवति, आतङ्कः–सद्योघाती विशूचिकादिरोगः से–तस्य गृहिणो धर्मबन्धुरहितस्य वधाय–विनाशाय भवति, तथा वधश्चानेकवधहेतुः, एवं चिन्तनीयमिति नवमं स्थानम् ९। तथा संकल्पः तस्य वधाय भवति, संकल्पः–इष्टानिष्टप्रयोगसंप्रयोगप्राप्तिजो मानस आतङ्कस्तस्य गृहिणः, तथा चेष्टायोगात् मिथ्याविकल्पाभ्यासेन ग्रहादिप्राप्तेर्वधाय भवति इत्येतच्चिन्तनीयमिति दशमं स्थानम् १०। तथा सोपक्लेशो गृहवास इति सहोपक्लेशैः सोपक्लेशो गृहिवासो–गृहाश्रमः, उपक्लेशाः–कृषिपाशुपाल्यवाणिज्याद्यनुष्ठानानुगताः पण्डितजनगर्हिताः शीतोष्णश्रमादयः, घृतलवणचिन्तादयश्चेत्येवं चिन्तनीयमित्येकादशं स्थानं ११। तथा निरुपक्लेशः पर्याय इति, एभिरेवोपक्लेशै रहितः प्रव्रज्यापर्यायः, अनारंभी कुचिन्तापरिवर्जितः श्लाघनीयो विदुषामित्येवं चिन्तनीयमिति द्वादशं स्थानं १२। तथा बन्धो गृहवासः सदा तद्धेत्वनुष्ठानात्, कोशकारकीटकवत् इत्येतच्चिन्तनीयं इति त्रयोदशं स्थानं १३। तथा मोक्षः पर्यायोऽनवरतं कर्मनिगडविगमान्मुक्तवदित्येवं चिन्तनीयमिति चतुर्दशं स्थानं १४। अत एव सावद्यो गृहवास इति सावद्यः–सपापः प्राणातिपातमृषावादादिप्रवृत्तेरित्येतच्चिन्तनीयमिति पञ्चदशं स्थानम् १५। एवमनवद्यः पर्याय इत्यपाप इत्यर्थः, अहिंसादिपालनात्मकत्वादेतच्चिन्तनीयमिति षोडशं स्थानम् १६। तथा बहुसाधारणा गृहिणां कामभोगा इति, बहुसाधारणाः–चौरराजकुलादिसामान्या गृहिणां–गृहस्थानां कामभोगाः पूर्ववत्, एतच्चिन्तनीयमिति सप्तदशं

भूतानां कर्मणां वेदयित्वाऽनुभूय, फलमिति वाक्यशेषः, किं?, मोक्षो भवति-प्रधानपुरुषार्थो भवति, नास्त्यवेदयित्वा-न भवति अननुभूय, अनेन सकर्मकमोक्षव्यवच्छेदमाह-इष्यते च स्वल्पकर्मोपेतानां कैश्चित्सहकारिनिरोधतस्तत्फलादानयादिभिस्तत्, तदपि नास्त्यवेदयित्वा मोक्षः, तथारूपत्वात् कर्मणः, स्वफलादाने कर्मत्वायोगात्, तपसा वा क्षपयित्वा-अनशनप्रायश्चित्तादिना वा विशिष्टक्षायोपशमिकशुभभावरूपेण तपसा प्रलयं नीत्वा, इह च वेदनमुदयप्राप्तस्य व्याधेरिवानारब्धोपक्रमस्य क्रमशः, अन्यानिबन्धनपरिक्लेशेन, तपःक्षपणं तु सम्यगुपक्रमेणानुदीर्णोदीरणदोषक्षपणवत्, अन्यनिमित्तमुपक्रमेणापरिक्लेशमित्यतस्तपोऽनुष्ठानमेव श्रेय इति, न किञ्चिद्दुहाधमेणेति संप्रत्युपेक्षितव्यमित्यष्टादशं पदं भवति-अष्टादशं स्थानं भवति १८। २१। भवति चात्र श्लोकः, अत्रेति अष्टादशस्थानार्थव्यतिकरे, उक्तानुक्तार्थसंग्रहपर इत्यर्थः, श्लोक इति च जातिपरो निर्देशः, ततश्च श्लोकजातिरनेकभेदा भवतीति प्रभूतश्लोकोपन्यासेऽपि न विरोधः—

जया य चयई धम्मं, अणज्जो भोगकारणा। से तत्थ मुच्छिए वाले, आयइं नावबुज्झइ ॥४८२॥

जया ओहाविओ होइ, इंदो वा पडिओ छमं। सव्वधम्मपरिब्भट्ठो, स पच्छा परितप्पइ ॥ ४८३ ॥

जया अ वंदिमो होइ, पच्छा होइ अवंदिमो। देवया व चुआ ठाणा, स पच्छा परितप्पइ ॥४८४॥

जया अ पूइमो होइ, पच्छा होइ अपूइमो। राया व रज्जपब्भट्ठो, स पच्छा परितप्पइ ॥ ४८५ ॥

जया अ माणिमो होइ, पच्छा होइ अमाणिमो। सिट्ठि व कब्बडे छूढो, स पच्छा परितप्पइ ॥४८६॥

जया अ थेरओ होइ, समइक्कंतजुव्वणो । मच्छुव्व गलं गिलित्ता, स पच्छा परितप्पइ ॥ ४८७ ॥
जया अ कुकुडुंबस्स, कुतत्तीहिं विहम्मइ । हत्थी व बंधणे बद्धो, स पच्छा परितप्पइ ॥ ४८८ ॥
पुत्तदारपरीकिन्नो, मोहसंताणसंतओ । पंकोसन्नो जहा नागो, स पच्छा परितप्पइ ॥ ४८९ ॥

जया येति-यदा चैवमष्टादशसु व्यावर्त्तनकारणेषु सत्स्वपि जहाति-त्यजति धर्मं-चारित्रलक्षणं, अनार्य इत्यनार्य इवा-नार्यो-म्लेच्छचेष्टितः, किमर्थमित्याह-भोगकारणात्-शब्दादिभोगनिमित्तं स-धर्मत्यागी, तत्र-तेषु भोगेषु मूर्च्छितो-गृद्धो बालोऽज्ञः, आयतिं-आगामिकालं नावबुध्यते-न सम्यगवगच्छतीति ॥ ४८२ ॥ एतदेव दर्शयति-जया उत्ति, यदाऽवधावितोऽपसृतो भवति संयमसुखविभूतेः, उत्प्रव्रजित इत्यर्थः, इन्द्रो वेति-देवराज इव पतितः क्ष्मां-क्ष्मां गतः, स्वविभवभ्रंशेन भूमौ पतित इतिभावः, क्ष्मा-भूमिः, सर्वधर्मपरिभ्रष्टः-सर्वधर्मेभ्यः-क्षान्त्यादिभ्यः आसेवितेभ्योऽपि यावत्प्रतिज्ञमननुपालनात् लौकिकेभ्योऽपि वा गौरवादिभ्यः परिभ्रष्टः-सर्वतश्च्युतः, स पतितो भूत्वा पश्चान्मनाग् मोहावसाने परितप्यते, किमिदमकार्यं मयानुष्ठितमित्यनुतापं करोतीति ॥ ४८३ ॥ जया येति, यदा च वन्द्यो भवति श्रमणपर्यायस्थो नरेन्द्रादीनां पश्चाद्भवति उन्निष्क्रान्तः सन्नवन्द्यः तदा देवता इव काचिदिन्द्रवर्जा स्थानच्युता सती स पश्चात्परितप्यते इति एतत्पूर्ववदेवेति ॥ ४८४ ॥ जया वेति, यदा च पूज्यो भवति वस्त्रपात्रादिभिः श्रामण्यसामर्थ्याल्लोकानां पश्चाद्भवत्युत्प्रव्रजितोऽपूज्यो लोकानामेव तदा राजेव राज्यपदभ्रष्टो महतो भोगाद्वियुक्तः (विप्रमुक्तः) स पश्चात्प-

रितप्यत एवेति पूर्ववदेवेति ॥ ४८५ ॥ तथा जया येति, यदा च मान्यो भवति अभ्युत्थानाज्ञाकरणादिना माननीयः शीलप्रभावेण पश्चाद्भवत्यमान्यस्तत्परित्यागेन, तदा श्रेष्ठीव कर्बटे-महाक्षुद्रसन्निवेशे क्षिप्तोऽमात्यः सत्परितप्यत, इति, एतत्समानं पूर्वेणेति ॥ ४८६ ॥ जया येति, यदा च स्थविरो भवति स त्यक्तसंयमो वयःपरिणामेन, एतद्विशेषप्रदर्शनायाह-समतिक्रान्तयौवनः, एकान्तस्थविर इतिभावः, तदा विपाककटुकत्वाद्भोगानां मत्स्य इव गलं-बडिशं गिलित्वाऽभिगृह्य तथाविधकर्मलोहकण्टकविद्धः सन् स पश्चात्परितप्यत इत्येतदपि समानं पूर्वेणेति ॥ ४८७ ॥ एतदेव स्पष्टयति-जया य कुकुडुंबस्सेत्यादि, कुकुटुम्बस्य-कुत्सितकुटुम्बस्य कुतप्तिभिः-कुत्सितचिन्ताभिरात्मनः संतापकारिणीभिर्विहन्यते-विषयभोगान् प्रति विघातं नीयते तदा स मुक्तसंयमः सन् परितप्यते पश्चात्, क इव ?-यथा हस्ती कुटुम्बबन्धनबद्धः परितप्यते ॥ ४८८ ॥ एतदेव स्पष्टयति-पुत्रदारेति, पुत्रदारपरिकीर्णो-विषयसेवनात्पुत्रकलत्रादिभिः सर्वतो विक्षिप्तो मोहसन्तानसन्ततो-दर्शनादिमोहनीयकर्मप्रवाहेण व्याप्तः, क इव-पङ्कावसन्नो यथा नागः-कर्दमावमग्नो वनगज इव स पश्चात्परितप्यते-हा ! हा ! किं मयेदं असमञ्जसमनुष्ठितमिति ॥ ४८९ ॥

अज्ज आहं गणी हुंतो, भाविअप्पा बहुस्सुओ। जइऽहं रमंतो परिआए, सामन्ने जिणदेसिए ॥४९०॥

देवलोगसमाणो अ, परिआओ महेसिणं। रयाणं अरयाणं च, महानरयसारिसो ॥ ४९१ ॥

अमरोवमं जाणिअ सुक्खमुत्तमं, रयाण परिआइ तहाऽरयाणं।

निरओवमं जाणिअ दुक्खमुत्तमं, रमिज्ज तम्हा परिआइ पंडिए ॥ ४९२ ॥

धम्माउ भट्ठं सिरिओ अवेयं, जन्नग्गिविज्झाअमिवऽप्पतेअं ।
हीलंति णं दुव्विहिअं कुसीला, दाढुड्डिअं घोरविसं व नागं ॥ ४९३ ॥

इहेवऽधम्मो अयसो अकित्ती, दुन्नामधिज्जं च पिहुज्जणंमि ।
चुअस्स धम्माउ अहम्मसेविणो, संभिन्नवित्तस्स य हिट्ठओ गई ॥ ४९४ ॥

भुंजित्तु भोगाइं पसज्झचेअसा, तहाविहं कट्टु असंजमं बहुं ।
गइं च गच्छे अणभिज्झिअं दुहं, बोही अ से नो सुलहा पुणो पुणो ॥ ४९५ ॥

कश्चित् सचेतनो नर एवं च परितप्यत इत्याह—अज्जत्ति, अद्य तावदहं-अद्य-अस्मिन् दिवसेऽहमित्यात्मनिर्देशे, गणी स्यां-आचार्यो भवेयं, भावितात्मा-प्रशस्तआगम(योग)भावनाभिः, बहुश्रुत-उभयलोकहितबह्वागमयुक्तः, यदि किं स्यादित्याह-यदि अहमरमिष्यं-रतिमकरिष्यं, पर्याये-प्रव्रज्यारूपे, सोऽनेकभेद इत्याह-श्रामण्ये-श्रमणानां सम्बन्धिनि, सोऽपि शाक्यादिभेदभिन्न इत्याह-जिनदेशिते-निर्ग्रन्थसम्बन्धिनीति ॥ ४९० ॥ अवधानोत्प्रेक्षिणः स्थिरीकरणार्थमाह-देवलोकसमाणोत्ति, देवलोकसमानस्तु-देवलोकसदृश एव पर्यायः-प्रव्रज्यारूपो महर्षीणां-

रितप्यत एवेति पूर्ववदेवेति ॥ ४८५ ॥ तथा जया येति, यदा च मान्यो भवति अभ्युत्थानाज्ञाकरणादिना माननीयः शीलप्रभावेण पश्चाद्भवत्यमान्यस्तत्परित्यागेन, तदा श्रेष्ठीव कर्बटे-महाक्षुद्रसन्निवेशे क्षिप्तोऽमात्यः सत्परितप्यत, इति, एतत्समान पूर्वेणेति ॥ ४८६ ॥ जया येति, यदा च स्थविरो भवति स त्यक्तसंयमो वयःपरिणामेन, एतद्विशेष-प्रदर्शनाथाह-समतिक्रान्तयौवनः, एकान्तस्थविर इतिभावः, तदा विपाककटुकत्वाद्भोगानां मत्स्य इव गलं-वडिशं गिलित्वाऽभिगृह्य तथाविधकर्मलोहकण्टकविद्धः सन् स पश्चात्परितप्यत इत्येतदपि समानं पूर्वेणेति ॥ ४८७ ॥ एतदेव स्पष्टयति-जया य कुकुडुंबस्सेत्यादि, कुकुडुम्बस्य-कुत्सितकुटुम्बस्य कुतप्तिभिः-कुत्सितचिन्ताभिरात्मनः संतापकारिणीभिर्विहन्यते-विषयभोगान् प्रति विघातं नीयते तदा स भुक्तसंयमः सन् परितप्यते पश्चात्, क इव ?-यथा हस्ती कुकुडुम्बबन्धनबद्धः परितप्यते ॥ ४८८ ॥ एतदेव स्पष्टयति-पुत्रदारेति, पुत्रदारपरिकीर्णो-विषयसेवनात्पुत्रकलत्रादिभिः सर्वतो विक्षिप्तो मोहसन्तानसन्ततो-दर्शनादिमोहनीयकर्मप्रवाहेण व्याप्तः, क इव-पङ्कावसन्नो यथा नागः-कर्दमावमग्नो वनगज इव स पश्चात्परितप्यते-हा ! हा ! किं मयेदं असमञ्जसमनुष्ठितमिति ॥ ४८९ ॥

अज्ज आहं गणी हुंतो, भाविअप्पा बहुस्सुओ। जइऽहं रमंतो परिआए, सामन्ने जिणदेसिए ॥४९०॥

देवलोगसमाणो अ, परिआओ महेसिणं। रयाणं अरयाणं च, महानरयसारिसो ॥ ४९१ ॥

अमरोवमं जाणिअ सुक्खमुत्तमं, रयाण परिआइ तहाऽरयाणं।

तथा दुर्नामधेयं च-पुराणः पतित इति
यदुतायशः-अपराक्रमकृतं न्यूनत्वं, तथाऽकीर्त्तिरदानपुण्यफलप्रवादरूपा, कस्येत्याह-च्युतस्य-धर्मादुत्प्रव्रजि-
कुत्सितनामधेयं च भवति, क्केत्याह-पृथग्जने-सामान्यलोकेऽपि, आस्तां विशिष्टलोके, तथा संभिन्नवृत्तस्य चाखण्डनीयखण्डित-
तस्येतिभावः, तथाऽधर्मसेविनः-कलत्रादिनिमित्तं षट्कायोपमर्द्दकारिणः, इति ॥ ४९४ ॥ अस्यैव विशेषापायमाह-भुंजित्तु
चारित्रस्य च क्लिष्टकर्मबन्धाद् अधस्ताद्गतिः-नरकेषु अवपात ( पूपपात ) प्रकटेन चित्तेन तथाविधं अज्ञोचितफलं
त्ति, स-उत्प्रव्रजितो भुक्त्वा भोगान्-शब्दादीन् प्रसह्यचेतसा-धर्म्मनिरपेक्षतया गतिं च गच्छत्यनभिध्यातां-
कृत्वाऽभिनिर्वर्त्यासंयमं कृष्याद्यारम्भरूपं बहुं-असन्तोषात्प्रभूतं स इत्थंभूतो मृतः सन् दुःखजननीं, बोधिश्चा-
अभिध्याता-इष्टा न तामनिष्टामित्यर्थः, काचित्सुखाऽप्येवंभूता भवत्यत आह-दुःखां-प्रकृत्यैवासुन्दरां
स्य जिनधर्मप्राप्तिश्चास्योन्निष्क्रान्तस्य न सुलभा पुनः पुनः-प्रभूतेष्वपि जन्मसु दुर्लभैव, प्रवचनविराधकत्वादिति ॥ ४९५ ॥

इमस्स ता नेरइअस्स जंतुणो, दुहोवणीअस्स किलेसवत्तिणो ।
पलिओवमं झिज्झइ सागरोवमं, किमंग पुण मज्झ इमं मणोदुहं ? ॥ ४९६ ॥

न मे चिरं दुक्खमिणं भविस्सइ, असासया भोगपिवास जंतुणो ।
न चे सरीरेण इमेणऽविस्सइ, अविस्सई जीविअपज्जवेण मे ॥ ४९७ ॥

सुसाधूनां, रतानां-सक्तानां, पर्याय एवेति गम्यते, एतदुक्तं भवति, यथा देवलोके देवाः प्रेक्षणकादिव्यापृता अदीनमनसः तिष्ठन्त्येवं सुसाधवोऽपि, ततोऽधिकं भावतः प्रत्युपेक्षणादिक्रियायां व्यापृताः, उपादेयविशेषत्वात्प्रत्युपेक्षणादेरिति देवलोकसमान एव पर्यायो महर्षीणां रतानामिति। अरतानां च-भावतः सामाचार्यसक्तानां च, चशब्दात् विषयाभिलाषिणां च मयवल्लिंगविडम्बकानां क्षुद्रसत्त्वानां महानरकसदृशो-रौरवादितुल्यस्तत्कारणत्वान्मानसदुःखातिरेकात् तथा विडम्बनाचेति ॥ ४९१ ॥ एतदुपसंहारेणैव निगमयन्नाह-अमर त्ति, अमरोपमं उक्तन्यायाद्देवसदृशं ज्ञात्वा-विज्ञाय सौख्यमुत्तमं-प्रधानं प्रशमसौख्यं, केषामित्याह-रतानां पर्याये-सक्तानां सम्यक्प्रत्युपेक्षणादिक्रियारूपश्रामण्ये, तथा अरतानां पर्याय एव, किमित्याह-नरकोपमं-नरकतुल्यं ज्ञात्वा दुःखमुत्तमं-प्रधानं, उक्तन्यायात्, यस्मादेवं रतारतविपाकस्तस्माद्रमेतामर्क्ति कुर्यात्, क्वेत्याह-पर्याये उक्तस्वरूपे पंडितः-शास्त्रार्थज्ञ इति ॥ ४९२ ॥ पर्यायच्युतस्यैहिकं दोषमाह-धम्माउ इति, धर्माद् श्रमणधर्माद्भ्रष्टं-च्युतं, श्रियोऽपेतं-तपोलक्ष्म्या अपगतं, यज्ञाग्निमग्निष्टोमाधनलं विध्यातमिव यागावसानेऽल्पतेजसं, अल्पशब्दोऽभावे, तेजःशून्यं भस्मकल्पमित्यर्थः, हीलयन्ति-कदर्थयन्ति पतितस्त्वमिति पंक्त्यपसारणादिना, एनं-उन्निष्क्रान्तं दुर्विहितमुन्निष्क्रमणादेव दुष्टानुष्ठायिनं कुशीलास्तत्संयोगो(सङ्गो)चिता लोकाः, स एव विशेष्यते-दाढुद्धिअंति, प्राकृतशैल्याद्धृतदंष्ट्रं-उत्खातदंष्ट्रं घोरविषमिव-रौद्रविषमिव नागं-सर्प, यज्ञाग्निसर्पोपमानं लोकनीत्या प्रधानभावादप्रधानभावख्यापनार्थमिति ॥ ४९३ ॥ एवमस्य भ्रष्टशीलस्यौघत ऐहिकं दोषमभिधायैहिकामुष्मिकमाह-इहेवत्ति, इहैव-इहलोक एवाधर्म्म इति, अयमधर्म्मः फलेन दर्शयति-

यदुतायशः–अपराक्रमकृतं न्यूनत्वं, तथाऽकीर्त्तिरदानपुण्यफलप्रवादरूपा, तथा दुर्नामधेयं च–पुराणः पतित इति कुत्सितनामधेयं च भवति, केत्याह–पृथग्जने–सामान्यलोकेऽपि, आस्तां विशिष्टलोके, कस्येत्याह–च्युतस्य–धर्मादुत्प्रव्रजितस्येतिभावः, तथाऽधर्मसेविनः–कलत्रादिनिमित्तं षट्कायोपमर्दकारिणः, तथा संभिन्नवृत्तस्य चाखण्डनीयखण्डितचारित्रस्य च क्लिष्टकर्मबन्धाद् अधस्ताद्गतिः–नरकेषु अवपात (पूपपात) इति ॥४९४॥ अस्यैव विशेषापायमाह–भुंजित्तु त्ति, स–उत्प्रव्रजितो भुक्त्वा भोगान्–शब्दादीन् प्रसह्यचेतसा–धर्मनिरपेक्षतया प्रकटेन चित्तेन तथाविधं अज्ञोचितफलं कृत्वाऽभिनिर्वर्त्यासंयमं कृष्याद्यारम्भरूपं बहुं–असन्तोषात्प्रभूतं स इत्थंभूतो मृतः सन् गतिं च गच्छत्यनभिध्यातां–अभिध्याता–इष्टा न तामनिष्टामित्यर्थः, काचित्सुखाऽप्येवंभूता भवत्यत आह–दुःखां–प्रकृत्यैवासुन्दरां दुःखजननीं, बोधिश्चास्य जिनधर्मप्राप्तिश्चास्योन्निष्क्रान्तस्य न सुलभा पुनः पुनः–प्रभूतेष्वपि जन्मसु दुर्लभैव, प्रवचनविराधकत्वादिति ॥ ४९५ ॥

इमस्स ता नेरइअस्स जंतुणो, दुहोवणीअस्स किलेसवत्तिणो ।
पलिओवमं झिज्झइ सागरोवमं, किमंग पुण मज्झ इमं मणोदुहं ? ॥ ४९६ ॥

न मे चिरं दुक्खमिणं भविस्सइ, असासया भोगपिवास जंतुणो ।
न चे सरीरेण इमेणऽविस्सइ, अविस्सई जीविअपज्जवेण मे ॥ ४९७ ॥

जस्सेवमप्पा उ हविज्ज निच्छिओ, चइज्ज देहं न हु धम्मसासणं ।
तं तारिसं नो पइलंति इंदिआ, उविंति(त)वाया व सुदंसणं गिरिं ॥ ४९८ ॥

इच्चेव संपस्सिअ बुद्धिमं नरो, आयं उवायं विविहं विआणिआ ।
काएण वाया अदु माणसेणं, तिगुत्तिगुत्तो जिणवयणमहिट्ठिज्जासि ॥ ४९९ ॥ त्ति बेमि ॥

॥ रइवक्का पढमा चूला समत्ता १ ॥

यस्मादेवं तस्मादुत्पन्नदुःखोऽप्येतदनुचिन्त्य नोत्प्रव्रजेदित्याह—इमस्सेति, अस्य तावदित्यात्मनिर्देशे, नारकस्य जन्तोः नरकमनुप्राप्तस्येत्यर्थः, दुःखोपनीतस्य—सामीप्येन प्राप्तदुःखस्य, क्लेशवृत्तेरेकान्तक्लेशचेष्टितस्य सतो नरक एव पल्योपमं क्षीयते सागरोपमं च यथाकर्मप्रत्ययं, किमङ्ग पुनर्ममेदं संयमारतिनिष्पन्नं मनोदुःखं तथाविधक्लेशवृत्ति-(दोष)रहितं ?, एतत् क्षीयत एव, एतच्चिन्तनेन नोत्प्रव्रजितव्यमिति ॥ ४९६ ॥ विशेषेणैतदेवाह—न मेत्ति, न मम चिरं-प्रभूतकालं दुःखमिदं—संयमारतिलक्षणं भविष्यति, किमित्याह—अशाश्वती—प्रायो यौवनकालावस्थायिनी भोगपिपासा—विषयतृष्णा, जन्तोः—प्राणिनः, अशाश्वतीत्व एव कारणान्तरमाह—न चेच्छरीरेणानेनापयास्यति—न यदि शरीरेणानेन करणभूतेन वृद्धस्यापि सतोऽपयास्यति, तथापि किमाकुलत्वं ?, यतोऽपयास्यति जीवितपर्ययेण—जीवितस्य व्यप-

गमेन–मरणेनैवं निश्चितः स्यादिति ॥ ४९७ ॥ अस्यैव फलमाह–जस्सेवत्ति, यस्येति–साधोरेवमुक्तेन प्रकारेणात्मा तु–तुशब्दस्यैवकारार्थत्वादात्मैव भवेन्निश्चितो दृढः यः स त्यजेद्देहं कचिद्विघ्न उपस्थिते, न तु धर्मशासनं–न पुनर्धर्माज्ञामिति, तं च तादृशं धर्मे निश्चितं न प्रचालयन्ति–संयमस्थानान्न प्रकम्पयन्ति इन्द्रियाणि–चक्षुरादीनि। निदर्शनमाह–उपपातवाता इव–संपतत्पवना इव सुदर्शनं गिरिं–मेरुं, एतदुक्तं भवति–यथा मेरुं वाता न चालयन्ति, तथा तमपीन्द्रियाणीति ॥ ४९८ ॥ उपसंहरन्नाह–इच्चेवत्ति, इत्येवमध्ययनोक्तं दुष्प्रयोगजीवित्वादि संप्रेक्ष्याऽऽदित आरभ्य, यथा यद्दृष्ट्वा बुद्धिमान्नरः सम्यग्बुद्ध्युपेत आयमुपायं विविधं विज्ञाय आयः–सम्यग्ज्ञानादेरुपायस्तत्साधनप्रकारः कालविनयादिर्विविधोऽनेकप्रकारस्तं ज्ञात्वा, किमित्याह–कायेन वाचाऽथवा मनसा–त्रिभिरपि करणैर्यथाप्रवृत्तैः, त्रिगुप्तिगुप्तः सन् जिनवचनमर्हदुपदेशमधितिष्ठेत् यथाशक्त्या तदुक्तैकक्रियापालनपरो भूयाद् भावायसिद्धौ तत्त्वतो मुक्तिसिद्धेः ॥ ४९९ ॥ ब्रवीमीति पूर्ववत् ॥

समाप्तं रतिवाक्याध्ययनमिति चूला १ ॥



व्याख्यातं प्रथमचूडाध्ययनम्, अधुना द्वितीयमारभ्यते, अस्यौघतः सम्बन्धः प्रतिपादित एव, विशेषतस्त्वनन्तराध्ययने सीदतः स्थिरीकरणमुक्तं, इह तु विविक्तचर्योच्यत इत्ययमभिसम्बन्धः—

चूलिअं तु पवक्खामि, सुअं केवलिभासिअं ।
जं सुणित्तु सुपुण्णाणं, धम्मे उप्पज्जए मई ॥ ५०० ॥
अणुसोअपट्ठिअबहुजणंमि, पडिसोअलद्धलक्खेणं ।
पडिसोअमेव अप्पा, दायव्वो होउकामेणं ॥ ५०१ ॥
अणुसोअसुहो लोओ, पडिसोओ आसवो सुविहिआणं ।
अणुसोओ संसारो, पडिसोओ तस्स उत्तारो ॥ ५०२ ॥
तम्हा आयारपरक्कमेणं, संवरसमाहिबहुलेणं ।
चरिआ गुणा अ नियमा, अ हुंति साहूण दट्ठव्वा ॥ ५०३ ॥

चूलियंति, चूडां-प्राग्व्यावर्णितशब्दार्थां तुशब्दविशेषितां भावचूडां, प्रवक्ष्यामीति-प्रकर्षेणावसरप्राप्ताभिधानलक्षणेन कथयामि, श्रुतं केवलिभाषितमिति, इयं हि चूडा श्रुतं-श्रुतज्ञानं वर्त्तते, कारणे कार्योपचाराद्, एतच्च केवलिभाषितं-अनन्तरमेव केवलिना प्ररूपितमिति सफलं विशेषणं, एवं च वृद्धवादः-"कयाचिदार्ययाऽसहिष्णुः कुरगडुकप्रायः संयतश्चातुर्मासिकादौ उपवासं कारितः, स तदाराधनया मृत एव, ऋषिघातिकाऽहमित्युद्विग्नाऽसौ तीर्थकरं पृच्छामीति गुणावर्जित-

देवतया नीता श्रीसीमन्धरस्वामिपादान्तिके, परिपृष्टो भगवान् , अदुष्टचित्ताऽघातिकेत्यभिधाय भगवतेमां चूडां ग्राहितेति,"
इदमेव विशेष्यते-यां श्रुत्वा-आकर्ण्य सपुण्यानां-कुशलानुबन्धिपुण्ययुक्तानां प्राणिनां, धर्मे-अचिन्त्यचिन्तामणिकल्पे
चारित्रधर्मे उत्पद्यते मतिः-संजायते भावतः श्रद्धा, अनेन चारित्रं चारित्रबीजं चोपजायत इत्येतदुक्तं भवति ॥ ५०० ॥
एतद्धि प्रतिज्ञासूत्रं, इह चाध्ययने चर्यागुणा अभिधेयास्तत्प्रवृत्तौ मूलपादभूतमिदमाह-अणुसोएत्ति, अनुश्रोतःप्रस्थिते-
नदीपूरप्रवाहपतितकाष्ठवद् विषयकुमार्गद्रव्यक्रियानुकूल्येन प्रवृत्ते बहुजने तथाविधाभ्यासात् प्रभूतलोके तथाप्रस्थानेनो-
दधिगामिनि, किमित्याह-प्रतिश्रोतोलब्धलक्ष्येण-द्रव्यतस्तस्यामेव नद्यां कथञ्चिद्देवतानियोगात् प्रतीपश्रोतःप्राप्तलक्ष्येण,
भावतस्तु विषयादिवैपरीत्यात्कथञ्चिदवाप्तसंयमलक्ष्येण प्रतिश्रोत एव दुरपाकरणीयमप्यपाकृत्य विषयादि संयमलक्ष्याभि-
मुखमेवात्मा-जीवो दातव्यः-प्रवर्त्तयितव्यो भवितुकामेन-संसारसमुद्रपरिहारेण मुक्ततया भवितुकामेन साधुना, न
क्षुद्रजनाचरितान्युदाहरणीकृत्यासन्मार्गप्रवणं चेतोऽपि कर्तव्यमपित्वागमैकप्रवणेनैव भवितव्यमिति, उक्तं च-"निमित्तमासाद्य
यदेव किञ्चन, स्वधर्ममार्गं विसृजन्ति बालिशाः । तपःश्रुतज्ञानधनास्तु साधवो, न यान्ति कृच्छ्रे परमेऽपि विक्रियाम् ॥ १ ॥
तथा-कपालमादाय विपन्नवाससा, वरं द्विषद्वेश्मसमृद्धिरीक्षिता । विहाय लज्जां न तु धर्मवैशसे, सुरेन्द्रसार्थेऽपि संमाहितं
मनः ॥ २ ॥ तथा-पापं समाचरति वीतघृणो जघन्यः, प्राप्यापदं सघृण एव विमध्यबुद्धिः । प्राणात्ययेऽपि न तु साधुजनः
स्ववृत्तं, वेलां समुद्र इव लङ्घयितुं समर्थः ॥ ३ ॥" इत्यलं प्रसंगेनेति ॥ ५०१ ॥ अधिकृतमेव स्पष्टयन्नाह-अणुसोएत्ति,
अनुश्रोतःसुखो लोकः उदकनिम्नाभिसर्प्पणवत् प्रवृत्याऽनुकूलविषयादिसुखो लोकः, कर्मगुरुत्वात्, प्रतिश्रोत एव त-

स्माद्विपरीत आश्रवः-इन्द्रियविजयादिरूपः परमार्थपेशलः कायवाङ्मनोव्यापारः, आश्रमो वा-व्रतग्रहणादिरूपः सुविहितानां-साधूनां, उभयलोके फलमाह-अनुश्रोतः संसारः शब्दादिविषयानुकूल्यं संसार एव, कारणे कार्योपचाराद्, यथा "विषं मृत्युः, दधि त्रपुषी प्रत्यक्षो ज्वरः," प्रतिश्रोत उक्तलक्षणः, तस्येति पञ्चम्यर्थे षष्ठी "सुपां सुपो भवन्तीति" वचनात्, तस्मात्संसारादुत्तारः उत्तरणमुत्तारो, हेतौ फलोपचारात्, यथा-"आयुर्घृतं, तन्दुलान्वर्षति पर्जन्य" इति ॥५०२॥ तम्हेत्ति, यस्मादेतदेवमनन्तरोदित तस्मादाचारपराक्रमेणेत्याचारे-ज्ञानादौ पराक्रमः-प्रवृत्तिबलं यस्य स तथाविध इति, गमकत्वाद्बहुव्रीहिः, तेनैवंभूतेन साधुना संवरसमाधिबहुलेनेति-संवरे-इन्द्रियादिविषये समाधिः-अनाकुलत्वं बहुलं-प्रभूतं यस्य स तथाविध इति, समासः पूर्ववत्, तेनैवंविधेन मताऽप्रतिघाताय विशुद्धये च किमित्याह-चर्या-भिक्षुभावसाधनी बाह्याऽनियतवासादिरूपा गुणाश्च-मूलोत्तरगुणरूपाः, नियमाश्च-उत्तरगुणानामेव पिण्डविशुद्ध्यादीनां स्वकालासेवननियोगा भवन्ति, साधूनां द्रष्टव्या इति, एते चर्यादयः साधूनां द्रष्टव्या भवन्ति, सम्यग्ज्ञानासेवनप्ररूपणारूपेणेति ॥ ५०३ ॥

अनिएअवासो समुआणचारिआ, अन्नायउञ्छं पइरिक्कया अ ।
अप्पोवही कलहविवज्जणा य, विहारचरिआ इसिणं पसत्था ॥ ५०४ ॥
आइन्नओमाणविवज्जणा अ, ओसन्नदिट्ठाहडभत्तपाणे ।
संसट्ठकप्पेण चरिज्ज भिक्खू, तज्जायसंसट्ठ जई जइज्जा ॥ ५०५ ॥

अमज्जमंसासि अमच्छरीआ, अभिक्खणं निव्विगइं गया अ ।
अभिक्खणं काउस्सग्गकारी, सज्झायजोगे पयओ हविज्जा ॥ ५०६ ॥
ण पडिन्नविज्जा सयणासणाइं, सिज्जं निसिज्जं तह भत्तपाणं ।
गामे कुले वा नगरे व देसे, ममत्तभावं न कहिंपि कुज्जा ॥ ५०७ ॥
गिहिणो वेआवडिअं न कुज्जा, अभिवायणवंदणपूअणं वा ।
असंकिलिट्ठेहिं समं वसिज्जा, मुणी चरित्तस्स जओ न हाणी ॥ ५०८ ॥

चर्यामाह–अनिएएति, अनियतवासो मासकल्पादिना अनिकेतवासो वा–अगृहे–उद्यानादौ वासः, तथा समुदा-
नचर्या–अनेकत्र याचितभिक्षाचरणं, अज्ञातोञ्छं–विशुद्धोपकरणग्रहणविषयं, पइरिक्कया य–विजनैकान्तसेविता च, अल्पो-
पधित्वं–अनुल्बणयुक्तस्तोकोपधिसेवित्वं, कलहविवर्जना च–तथा तद्वासिजनभण्डनविवर्जना, विवर्जनं विवर्जना श्रवणकथा-
दिनापि वर्जनमित्यर्थः । विहारचर्या–विहरणस्थितिः, विहरणमर्यादा, इयमेवंभूता ऋषीणां–साधूनां, प्रशस्ता–व्या
क्षेपाभावादाज्ञापालनेन भावचरणसाधनात्पवित्रेति ॥ ५०४ ॥ विहारचर्या ऋषीणां प्रशस्तेत्युक्तं, तद्विशेषोपदर्शनायाह–आइ-
ण्णेत्ति–आकीर्णमवमानविवर्जना च विहारचर्या ऋषीणां प्रशस्तेति, तत्राकीर्णं–राजकुलसंखड्यादि, अवमानं–स्वपक्षपर-

पक्षप्राभृतजं लोकाबहुमानादि, अस्य विवर्जनं, आकीर्ण हस्तपादादिलूषणदोषात्, अवमाने अलाभाधाकर्मादिदोषादिति, तथोत्सन्नदृष्टाहृतं-प्राय उपलब्धमुपनीतं, उत्सन्नशब्दः प्रायो वृत्तौ वर्तते, यथा "देवा उस्सन्नं सायं वेयणं वेयंति", किमित्याह-भक्तपानं-ओदनारनालादि, इदं चोत्सन्नदृष्टाहृतं, यत्रोपयोगः शुद्ध्यति, त्रिगृहान्तरादारत इत्यर्थः, "भिक्खग्गाही एगत्थ कुणइ, बीओ अ दोसु उवओगमिति" वचनात्, इत्येवम्भूतमुत्सन्नं दृष्टाहृतं भक्तपानमृषीणां प्रशस्तमिति योगः, तथा संसृष्टकल्पेन-हस्तमात्रकादिसंसृष्टविधिना चरेद्भिक्षुरिति उपदेशः, अन्यथा पुरःकर्मादिदोषात्, संसृष्टमेव विशिनष्टि-तज्जातसंसृष्ट इत्यामगोरसादिसमानजातीयसंसृष्टे हस्तमात्रकादौ यतिर्यतेत-यत्नं कुर्यात्, अतज्जातसंसृष्टे संसर्जनादिदोषादिति, अनेनाष्टमप्रवचनं, तद्यथा-" संसट्ठे हत्थे संसट्ठे मत्ते सावसेसे दव्वे" इत्यादि, अत्र प्रथमो भङ्गः श्रेयान्, शेषाश्च चिन्त्या इत्यादि ॥ ५०५ ॥ उपदेशाधिकार एवेदमाह-अमद्येति, अमद्यमांसाशी भवेदिति योगः, अमद्यपः अमांसाशी च स्यादेते च मद्यमांसे लोकागमप्रतीते एव, ततश्च यत्केचनाभिदधति-आरनालादिष्वपि संधानात् ओदनाद्यपि प्राण्यङ्गत्वात्त्याज्यमिति, तदसत्, अमीषां मद्यमांसत्वायोगात्, लोकशास्त्रयोरप्रसिद्धत्वात्, संधानप्राण्यङ्गत्वतुल्यत्वचोदना त्वभाष्यी, अतिप्रसङ्गदोषात्, द्रवत्वशीतत्वतुल्यतया मूत्रपानभार्यागमनादिप्रसङ्गात् इत्यलं प्रसङ्गेन । अक्षरगमनिकामात्रप्रक्रमात्, तथा अमत्सरी च-न परसम्पद्द्वेषी च स्यात्, तथा अभीक्ष्णं-पुनः पुनः पुष्टकारणाभावे निर्विकृतिकश्च-निर्गतविकृतिपरिभोगश्च भवेत्, अनेन परिभोगोचितविकृतीनामप्यकारणे प्रतिषेधमाह । तथाऽभीक्ष्णं गमनागमनादिषु, विकृतिपरिभोगेऽपि चान्ये । किमित्याह-कायोत्सर्गकारी भवेत् ईर्यापथप्रतिक्रमणमकृत्वा न किञ्चिदन्यत्कुर्यात्, तदशुद्धतापत्तेरिति भावः । तथा स्वाध्याययोगे-

वाचनाद्युपचारव्यापार आचाम्लादौ प्रयतोऽतिशययत्नवान्भवेत्तथैव तस्य सफलत्वात्, विपर्यये उन्मादादिदोषप्रसङ्गादिति
॥ ५०६ ॥ किंच–न पडिण्णवेज्जत्ति, न प्रतिज्ञापयेन्मासादिकल्पपरिसमाप्तौ गच्छन् भूयोऽप्यागतस्य ममैवैतानि दात-
व्यानीति न प्रतिज्ञां कारयेद् गृहस्थं, किमाश्रित्येत्याह–शयनासने शय्यां निषद्यां तथा भक्तपानमिति, तत्र शयनं–
संस्तारकादि, आसनं–पीठकादि, शय्या–वसतिः, निषद्या–स्वाध्यायादिभूमिः, तथा–तेन प्रकारेण तत्कालावस्थानोचितेन
भक्तपानं–खण्डखाद्यकद्राक्षापानकादि न प्रतिज्ञापयेत्, ममत्वदोषात्, सर्वत्र एतन्निषेधमाह–ग्रामे–शालिग्रामादौ, कुले वा–
श्रावककुलादौ, नगरे–साकेतादौ, देशे वा–मध्यदेशादौ ममत्वभावं ममेदमिति, स्नेहमोहं न क्वचिदुपकरणादिष्वपि कुर्यात्
तन्मूलत्वाद् दुःखादीनामिति ॥ ५०७ ॥ उपदेशाधिकार एवाह–गिहिणोत्ति, गृहिणो–गृहस्थस्य वैयावृत्त्यं–गृहिभावो-
पकाराय तत्कर्मस्वात्मनो व्यावृत्तभावं न कुर्यात्, स्वपरोभयाश्रेयःसमायोजनदोषात्, तथाऽभिवादनं–वाङ्नमस्काररूपं,
वन्दनं–कायप्रणामलक्षणं, पूजनं च–वस्त्रादिभिः समभ्यर्चनं वा, गृहिणो न कुर्यादुक्तदोषप्रसङ्गादेव, तथैतद्दोषपरिहारायैव अ-
संक्लिष्टैः–गृहिवैयावृत्त्यादिकरणसंक्लेशरहितैः साधुभिः समं वसेन्मुनिश्चारित्रस्य–मूलगुणादिलक्षणस्य यतो–येभ्यः साधु-
भ्यः सकाशान्न हानिः, संवासतस्तदकृत्यानुमोदनादिनेत्यनागतविषयं चेदं सूत्रं, प्रणयनकाले संक्लिष्टसाध्वभावादिति ॥५०८॥

ण या लभेज्जा निउणं सहायं, गुणाहिअं वा गुणओ समं वा ।
इक्कोऽवि पावाइं विवज्जयंतो, विहरिज्ज कामेसु असज्जमाणो ॥ ५०९ ॥

संवच्छरं वावि परं पमाणं, वीअं च वासं न तहिं वसिज्जा ।
सुत्तस्स मग्गेण चरिज्ज भिक्खू, सुत्तस्स अत्थो जह आणवेइ ॥ ५१० ॥
जो पुव्वरत्तावररत्तकाले, संपेहए अप्पगमप्पगेणं ।
किं मे कडं किं च मे किच्चसेसं ?, किं सक्कणिज्जं न समायरामि ?॥ ५११ ॥
किं मे परो पासइ ? किं च अप्पा ?, किं वाऽहं खलिअं न विवज्जयामि ? ।
इच्चेव सम्मं अणुपासमाणो, अणागयं नो पडिबंध कुज्जा ॥ ५१२ ॥
जत्थेव पासे कइ दुप्पउत्तं, काएण वाया अदु माणसेणं ।
तत्थेव धीरो पडिसाहरिज्जा, आइन्नओ खिप्पमिव क्खलीणं ॥ ५१३ ॥
जस्सेरिसा जोग जिइंदिअस्स, धिईमओ सप्पुरिसस्स निच्चं ।
तमाहु लोए पडिबुद्धजीवी, सो जीअई संजमजीविएणं ॥ ५१४ ॥

अप्पा खलु सययं रक्खिअव्वो, सव्विंदिएहिं सुसमाहिएहिं ।
अरक्खिओ जाइपहं उवेइ, सुरक्खिओ सव्वदुहाण मुच्चइ ॥ ५१५ ॥ त्तिबेमि

इइ विवित्तचरिया चूडा समत्ता २ ॥

॥ इइ दसवेयालियं सुत्तं समत्तं ॥

"असंक्लिष्टैः समं वसे"दित्युक्तमत्र विशेषमाह–ण येति, कालदोषान्न यदि लभेत–न यदि कथञ्चित्प्राप्नुयान्निपुणं–संयमानुष्ठानकुशलं सहायं–परलोकसाधनद्वितीयं, किंविशिष्टमित्याह–गुणाधिकं वा–ज्ञानादिगुणोत्कटं वा, गुणतः समं वा–तृतीयार्थे पञ्चमी गुणैस्तुल्यं वा, वाशब्दाद्धीनमपि जात्यकाञ्चनकल्पं विनीतं वा, ततः किमित्याह–एकोऽपि संहननादियुक्तः पापानि–पापकारणान्यसदनुष्ठानानि विवर्ज्जयन्–विविधं–अनेकैः प्रकारैः सूत्रोक्तैः परिहरन्विहरेदुचितविहारेण कामेष्विच्छाकामादिष्वसज्यमानः–सङ्गमगच्छन्, एकोऽपि विहरेत्, न तु पार्श्वस्थादिपापमित्रसङ्गं कुर्यात्, तस्य दुष्टत्वात्, तथा चान्यैरप्युक्तं–" वरं विहर्त्तुं सह पन्नगैर्भवेच्छठात्मभिर्वा रिपुभिः सहोषितुम्। अधर्मयुक्तैश्चपलैरपण्डितैर्न पापमित्रैः सह वर्त्तितुं क्षमम् ॥ १ ॥ इहैव हन्युर्भुजगा हि रोषिताः, धृतासयश्छिद्रमवेक्ष्य चाऽरयः। असत्प्रवृत्तेन जनेन संगतः, परत्र चैवेह च हन्यते जनः ॥ २ ॥ " तथा–" परलोकविरुद्धानि, कुर्वाणं दूरतस्त्यजेत्। आत्मानं योऽभिसंधत्ते, सोऽन्यस्मै स्यात्कथं हितः ? ॥ ३ ॥ " तथा–" ब्रह्महत्या सुरापानं, स्तेयं गुर्वङ्गनागमः। महान्ति पातकान्याहुरेभिश्च सह संगमम् ॥ ४ ॥ " इत्यादि

॥ ५०९ ॥ विहारकालमानमाह–संवच्छरं ति, संवत्सरं वाप्यत्र संवत्सरशब्देन वर्षासु चातुर्मासिको ज्येष्ठावग्रह, उच्यते, तमपि, अपिशब्दात् मासमपि, परं प्रमाणं–वर्षाऋतुबद्धयोरुत्कृष्टमेकत्र निवासकालमानमेतत्, द्वितीयं च वर्षं चशब्दस्य व्यवहित उपन्यासः, द्वितीयं वर्षं च वर्षासु चशब्दान्मासं च ऋतुबद्धे न तत्र क्षेत्रे वसेत्, यत्रैको वर्षाकल्पो मासकल्पश्च कृतः, अपि तु सङ्गदोषाद् द्वितीयं तृतीयं च परिहृत्य वर्षादिकालं ततस्तत्र वसेदित्यर्थः, सर्वथा, किं बहुना ?, सर्वत्रैव सूत्रस्य मार्गेण चरेद्भिक्षुरागमादेशेन वर्त्तेतेति भावः, तत्रापि नौघत एव यथाश्रुतग्राही स्यात्, अपि तु सूत्रस्यार्थः–पूर्वापराविरोधितन्त्रयुक्तिघटितः पारमार्थिकोत्सर्गापवादगर्भो यथाऽऽज्ञापयति–नियुङ्क्ते तथा वर्त्तेत, नान्यथा, यथेहापवादतो नित्यवासेऽपि वसतावेव प्रतिमागादि साधूनां संस्तारकगोचरादिपरिवर्त्तेन, नान्यथा, शुद्धापवादायोगात्, इत्येवं वन्दनप्रतिक्रमणादिष्वपि तदर्थं प्रत्युपेक्षणेन अनुष्ठानेन वर्त्तेत, न तु तथाविधलोकहेर्या तं परित्यजेत्, तदाशातनाप्रसङ्गादिति ॥ ५१० ॥ एवं च विविक्तचर्यावतोऽसीदनगुणोपायमाह–जो त्ति, यः साधुः पूर्वरात्रापररात्रकाले, रात्रौ प्रथमचरमयोः प्रहरयोरित्यर्थः, संप्रेक्षते सूत्रोपयोगनीत्याऽऽत्मानं कर्मभूतं आत्मनैव, करणभूतेन, कथमित्याह–किं मे कृतमिति, छान्दसत्वात्तृतीयार्थे षष्ठी, किं मया कृतं ? शक्त्यनुरूपं तपश्चरणादियोगस्य, किं च मम कृत्यशेषं–कर्त्तव्यशेषं उचितं ?, किं शक्यं–वयोऽवस्थानुरूपं वैयावृत्यादि न समाचरामि–न करोमि, तदकरणे हि तत्कालं नाशयति ॥ ५११ ॥ तथा–किं मेत्ति, किं मम [ स्खलितं ] परः–स्वपक्षपरपक्षलक्षणः पश्यति, किंवाऽऽत्मा कश्चिन्मनाक् संवेगापन्नः ?, किं चाऽहं ओघत एव स्खलितं न विवर्जयामीत्येवं सम्यगनुपश्यन्ननेनैव प्रकारेण स्खलितं ज्ञात्वा सम्यगागमोक्तेन विधिना भूयः पश्येत् अनागतं न

प्रतिबन्धं कुर्यात्–आगामिकालविषयं नासंयमप्रतिबन्धं करोति ॥ ५१२ ॥ कथमित्याह–जत्थेवेति, यत्रैव पश्यत्युक्तव-त्परात्मदर्शनद्वारेण क्वचित्–संयमस्थानावसरे धर्म्मोपधिप्रत्युपेक्षणादौ दुष्प्रयुक्तं–दुर्व्यवस्थितमात्मानमिति गम्यते, केने-त्याह–कायेन वाचा अथ मानसेन–मन एव मानसं, करणत्रयेणेत्यर्थः, तत्रैव–तस्मिन्नेव संयमस्थानावसरे धीरो–बुद्धि-मान् प्रतिसंहरेत्–प्रतिसंहरति य आत्मानं, सम्यग्विधिं प्रतिपद्यत इत्यर्थः, निदर्शनमाह–आकीर्णो जवादिभिर्गुणैर्जात्योऽश्व इति गम्यते, असाधारणविशेषणात्, तच्चेदं–क्षिप्रमिव–शीघ्रमेव खलिनं–कविकमिव, यथा जात्योऽश्वो नियमितगमननिमित्तं शीघ्रं खलिनं प्रतिपद्यते, एवं यो दुष्प्रयोगपरित्यागेन खलिनकल्पं सम्यग्विधिं, एतावताऽंशेन दृष्टान्त इति ॥ ५१३ ॥ यः पूर्वरात्रेत्याद्यधिकारोपसंहारायाह–जस्सरिसत्ति, यस्य साधोरीदृशाः स्वहितालोक(च)नप्रवृत्तिरूपा योगा–मनोवाक्काय-व्या-पारा जितेन्द्रियस्य–वशीकृतस्पर्शनादीन्द्रियकलापस्य धृतिमतः–संयमे सधृतिकस्य सत्पुरुषस्य–प्रमादजयात् महा-पुरुषस्य नित्यं–सर्वकालं सामायिकप्रतिपत्तेरारभ्यामरणान्तं तमाहुर्लोके प्रतिबुद्धजीविनं तमेवंभूतं साधुमाहुः–अभि-दधति विद्वांसो लोके–प्राणिसंघाते प्रतिबुद्धजीविनं–प्रमादनिद्रारहितजीवितशीलं, स एवंगुणयुक्तः सन् जीवति संयम-जीवितेन–कुशलाभिसंधिभावात् सर्वथा संयमप्रधानेन जीवितेनेति ॥५१४॥ शास्त्रमुपसंहरन्नाह–उपदेशसर्वतत्त्वमाह–अप्पेति, आत्मा खल्विति–खलुशब्दो विशेषणार्थः, शक्तौ सत्यां परोऽपि, सततं–सर्वकालं रक्षितव्यः–पालनीयः पारलौकिका-पायेभ्यः, कथमित्युपायमाह–सर्वेन्द्रियैः–स्पर्शनादिभिः सुसमाहितेन–निवृत्तविषयव्यापारेणेत्यर्थः, अरक्षणरक्षणयोः फलमाह–अरक्षितः सन् जातिपन्थानं–जन्ममार्गं संसारमुपैति–सामीप्येन गच्छति। सुरक्षितः पुनर्यथागममप्रमादेन

सर्वदुःखेभ्यः-शारीरमानसेभ्यो विमुच्यते-विविधं-अनेकैः प्रकारैः अपुनर्ग्रहणपरमस्वास्थ्यापादनलक्षणैर्मुच्यते विमुच्यते ॥ ५१५ ॥ इति ब्रवीमीति पूर्ववत् ॥

इति विविक्तचर्यानाम्नी द्वितीयचूला समाप्ता २ ॥

## ॥ समाप्तेयं दशवैकालिकस्य लघुटीका ॥

महायराया याकिन्या, धर्मपुत्रेण चिन्तिता । आचार्यहरिभद्रेण, टीकेयं शिष्यबोधिनी ॥ १ ॥
दशवैकालिके टीकां विधाय यत् पुण्यमर्जितं तेन । मात्सर्यदुःखविरहाद् गुणानुरागी भवतु लोकः ॥ २ ॥

(लघुटीकाप्रणेतॄणां प्रशस्तिः-)

दशकालिकानुयोगात्, सूत्रव्याख्या पृथक्कृता । हरिभद्राचार्यकृतान्मोहाद्भक्त्याऽथवा मया ॥ ३ ॥
श्रीमद्बोधकशिष्येण, श्रीमत्सुमतिसूरिणा । विद्वद्भिस्तत्र नोद्वेगो, मयि कार्यो मनागपि ॥ ४ ॥
यस्माद् व्याख्याक्रमः प्रोक्तः, सूरिणा भद्रबाहुना । आवश्यकस्य निर्युक्तौ, व्याख्याक्रमविपश्चिता ॥ ५ ॥
सूत्रार्थः प्रथमो ज्ञेयो, निर्युक्तिमिश्रितः ततः । सर्वैर्व्याख्याक्रमैर्युक्तो, भणितव्यस्तृतीयकः ॥ ६ ॥

प्रमादकार्यविक्षेपचेतसां तदयं यया । क्रियया अवबोधार्थे, साधूनां तु पृथक्कृतः ॥ ७ ॥

लब्ध्वा मानुष्यकं जन्म, ज्ञात्वा सर्वविदां मतम् । प्रमादमोहसंमूढा, वैकल्यं ये नयन्ति हि ॥ ८ ॥

जन्ममृत्युजराव्याधिरोगशोकाद्युपद्रुते । संसारसागरे रौद्रे, ते भ्रमन्ति विडम्बिताः ॥ ९ ॥

ये पुनर्ज्ञानसम्यक्त्वचारित्रविहितादराः । भवाम्बुधिं समुल्लङ्घ्य, ते यान्ति पदमव्ययम् ॥ १० ॥

ये भव्यान् प्रतिबोध्य जैनवचनैः स्याद्वादसंभूषितै–र्निर्वाणाश्रितचेतसो विदधिरे स(त्साधुमार्गाश्रिता)न् ।

साधूनां विधिना च सूरिपदवीमारोपयाञ्चक्रिरे, ते श्रीमज्जिनदेवसूरिचरणा रक्षन्तु सङ्घं सदा ॥ ११ ॥

समाप्ता श्रीदशवैकालिकटीकेति ॥ ग्रंथाग्रं ३५००, मंगलमस्तुलेखकपाठकयोः । संवत् १६६२ वर्षे वैशाखवदि ४ भौमे लिखितं । शुभं भवतु ॥

प्रत्यन्तरे—

मूलं दयादानमुखाश्चतस्रः, शाखाः प्रशाखा नियमव्रतानि । पुष्पाणि संपत्प्रकराः फलं तु, मोक्षो भवेद् धर्मसुरद्रुमस्य ॥११॥

इति दशवैकालिकलघुटीका समाप्ता ॥ छ ॥ शुभं भवतु ॥ मंगलमस्तु ॥ श्रीगुरुभ्यो नमः ॥ परमगुरुभ्यो नमः ॥ मंगलमस्तु ॥ संवत् १५१६ वर्षे माघ वदि १ गुरौ अद्ये हि श्रीघोघावेलाकूले महाराजाधिराजपातसाहश्रीकुतबदीन-

महिम्मदराज्ये व्यापारी तन्नियुक्तः सं०सोमदत्तपंचकुलप्रतिपत्तौ ॥ श्रीमद्धर्मभृतां वरिष्ठतपसां, पू०सत्यविशालप्रभृतीनां, महात्मनां तेषामध्ययनार्थं पुस्तकमिदमलिखापयत्, द्युम्नेन स्वार्थं तथा परोपकाराय ॥ [श्रीगणेशाय ॥ श्रीवक्रतुण्डाय ॥ ] शुभं भवतु ॥

श्रीआणंदविमलसूरिगुरुभ्यो नमः पं०वीरविमलगणि ।

इति भगवच्छय्यंभवश्रुतकेवलिनिर्यूढं श्रीमत्सुमतिसाधुसूरिणा भवविरहाङ्कितबृहट्टीकोद्धृतवृत्त्युपेतं

# श्रीदशवैकालिकं समाप्तम् ।



श्रेष्ठिदेवचन्द्रलालभाई-जैन-पुस्तकोद्धारे ग्रन्थाङ्कः ॥

श्रीसुमतिसाधुसूरिकृतलघुविवरणोपेत—

श्रीदशवैकालिकसूत्रस्य

# परिशिष्टानि ।



## प्रथमं परिशिष्टम् ।

### श्रीदशवैकालिकसूत्रस्य सूत्राणां गाथानां च अकारादिक्रमः

महिम्मदराज्ये व्यापारी तत्पुत्रः सं०सोमदत्तपंचकुलप्रतिपत्तौ ॥ श्रीमद्धर्मभृतां परिष्ठतप्रमां पू०मत्यविशालप्रभृतीनां, महात्मनां तेषामध्ययनार्थं पुस्तकमिदमलिखापयत्, धुम्नेन, स्वार्थे तथा परोपकाराय ॥ [ श्रीगणेशाय ॥ श्रीरुद्रतुष्ठाय ॥ ] शुभं, भवतु ॥

श्रीआणंदविमलसूरिगुरुभ्यो नमः पं०श्रीरविमलगणि ।

इति भगवच्छय्यंभवश्रुतकेवलिनिर्यूढं श्रीमत्सुमतिसाधुसूरिणा भवविरहाङ्कितपद्दद्वीकोद्धृतवृत्युपेतं

## श्रीदशवैकालिकं समाप्तम् ।

श्रेष्ठिदेवचन्द्रलालभाई-जैन-पुस्तकोद्धारे ग्रन्थाङ्कः ॥

श्रीसुमतिसाधुसूरिकृतलघुविवरणोपेत—

श्रीदशवैकालिकसूत्रस्य

# परिशिष्टानि ।



## प्रथमं परिशिष्टम् ।

### श्रीदशवैकालिकसूत्रस्य सूत्राणां गाथानां च अकारादिक्रमः

# द्वितीयं परिशिष्टम् ।

## 'अन्यः' इत्यादि



---

# तृतीयं परिशिष्टम् ।

## साक्षिग्रन्थानामकारादि

# चतुर्थं परिशिष्टम् ।

## साक्षिपाठानामकारादि

# पञ्चमं परिशिष्टम् ।

## विशिष्टनाम्नामकारादि

# षष्ठं परिशिष्टम् ।

## दर्शितान्यतिदिष्टान्युदाहरणानि



# सप्तमं परिशिष्टम् ।

## टीकान्तरगता व्याकरणसिद्धिः

# अष्टमं परिशिष्टम् ।

## टीकान्तरगता न्यायाः

| न्यायः | पृष्ठाङ्कः |
|---|---|
| अक्षोपाङ्गन्यायः | ७९ |
| अन्धप्रदीप्तपलायनघुणाक्षरकरणवत् | ४६ |
| एकग्रहणे तज्जातीयग्रहणम् | ८, २७, ३६, १००, १८८ |
| सति तस्मिन्नव्यवच्छित्त्यभावात् | २१ |
| सामान्यग्रहणेऽपि | ६२ |

इति लघुवृत्त्युपेतस्य श्रीदशवैकालिकसूत्रस्य समाप्तानि परिशिष्टानि

इति भगवच्छय्यंभवश्रुतकेवलिभिर्दृब्धं

श्रीमत्सुमतिसाधुसूरिणा भवविरहाङ्कितवृहट्टीकोद्धृतवृत्त्युपेतं

# श्रीदशवैकालिकं समाप्तम् ।

इति श्रेष्ठिदेवचन्द्रलालभाई-जैन-पुस्तकोद्धारे ग्रन्थाङ्कः १०२ ॥